THE

# JOURNAL OF VEDIC STUDIES

(Issued three times a year)

The Journal publishes unknown and rare Vedic texts in critical editions, and contains articles dealing with higher criticism, exegesis and comparative studies

---

*Annual subscription Rupees 12 or Shillings 20*

---

Books for review should be sent to the Chief Editor

Published by

MESSRS. MEHAR CHAND LACHHMAN DAS
Sanskrit Booksellers and Publishers
LAHORE
(India)

## IN PRESS

Kaṭha Brāhmaṇa. The Brāhmaṇa fragments printed by L. von Schroeder and Caland have been much improved upon with the help of new mss., and several new Brāhmaṇas added with a very useful introduction, notes and appendices.

Śāṅkhāyana-Śrautasūtra, translated into English by the late Prof. Dr. Caland and Prof. Dr. Raghu Vira. This is the first English translation of a Śrautasūtra.

Maitrāyaṇīya-Saṃhitā-Padapāṭha, accented. It contains the padapāṭha of the Brāhmaṇa portion as well, which was not available to L. von Schroeder, the editor of the Saṃhitā.

PUBLISHERS

Messrs. MEHAR CHAND LACHHMAN DAS

Sanskrit Booksellers & Publishers

Said Mitha, Lahore

# VEDIC MYSTICISM

Being rhythmic renderings of Vedic verses

BY

RAGHU VIRA, M. A., PH. D., D. LITT. ET PHIL.

समुद्रो अस्मि विधर्मणा

THE UNBOUNDED OCEAN AM I

*Poets, philosophers and mystics from all parts of the world have been charmed by the music and freshness of the renderings*
*The originals and the translations are given on opposite pages*

**MEHAR CHAND LACHHMAN DAS**
Said Mitha, Lahore

Rupees five *1933* Shillings 7/6

# DRĀHYĀYAṆA-ŚRAUTASŪTRA

With the Commentary of Dhanvin

Paṭalas 11–15

edited by

RAGHU VIRA

Thirty years ago Dr. J. N. Reuter of the University of Helsingfors in Denmark had printed the first ten paṭalas and four sūtras of the eleventh of this Śrauta and its commentary, and a promise was held out for completing the work in two more parts. The promise was never made good. After getting an assurance from the Publishers, Messrs. Luzac and Co., London, that there is no further possibility of their continuing the work I procured the manuscripts that were in my reach and began with the 11th paṭala. They are all written in the Devanāgarī script:

(1) Panjab University Library, Lahore, No. 5620a. Text only, paṭ. 1–22.

(2) Dr. Sardesai of the Oriental Book Agency, Poona, very kindly presented to me this beautifully written and complete ms. of the text and com.

(3) Pb. Univ. Lib., Lahore, No. 5451. Text and com., complete.

In the meanwhile I got Reuter's unpublished text for the five paṭalas, 11 (excluding the first four sūtras)–15. Herein were collated the following manuscripts:

A. Devanāgarī mss.:

(1) India Office, London, Colebrook Collection, No. 363b. Text only, complete.

(2) India Office, London, Colebrook Coll., No. 363a. Text and commentary, paṭ. 1–11.

Bodleyan Library, Oxford, Wilson Coll., No. 328. Text and Com., paṭ. 12–15. 4. 9.

The two mss. are really one ms. split into two. They are written in the same hand.

(3) Calcutta Sanskrit College, No. 259. Text and com., complete.

B. Grantha mss.:

(4) India Office, London, Burnell Coll., No. 152. Text only, complete.

(5) India Office, London, Burnell Coll., No. 187. Text and com., paṭ. 1–21.

In our critical apparatus they are denoted by Da, Df, De, Ga, Gb respectively. Our own mss. are Db, Dc, Dd. Of these the largest number of individual readings are shown by Gb. Dcde form one uniform group. Dcd mark the end of every sūtra by the addition of iti. It is a very convenient device and one wonders why it did not get wide currency in ancient times. The mss. do not show the colophons either completely or systematically. Clerical errors of every type are rather numerous. It was not possible to register all of them. The editor had to exercise his judgement oftener, than he is usually called to. I have met misinterpretations of ligatures, wrong combinations leading to "ghost-words" and to false accomoda-

tion, assimilation of words and of terminations, anagrammatism, metathesis (either of words or of whole passages), substitution of synonyms, haplography, lipography, dittography, and adscripts. Being traceable to single mss. they were of no material use for reaching back to the original, and hence they were rejected.

These eight mss. fairly settle the text. The collation of more mss. would not, I am sure, take the editor any nearer to the original, as it was known to the commentator Dhanvin. The Sūtra had already been conflated before the time of Dhanvin, that is before Sāyaṇa who quotes Dhanvin extensively.

The Śrauta text given in the following pages is after the commentator. He is a fairly safe guide. He is a master of his tradition[1] and his choice of the readings is remarkably good. But there are instances where difficulties arise. The only passage where I have taken courage to put in the text, what Dhanvin expressly calls an apapāṭha, is 11. 1. 7 मानो भद्रः (instead of Dhanvin's आ नो भद्रः). In the very next sūtra, however, I have allowed मूलतः to remain where Dhanvin puts it. मूलतः really belongs to the end of sūtra 7. For the division of the text into sūtras Dhanvin (or a lost predecessor of his) alone is responsible. Agnisvāmin, who is commenting on the Lāṭ., has a totally different division.[2]

THE DRĀHYĀYAṆA AND THE LĀṬYĀYANA ŚRAUTASŪTRAS

The two Sūtras belong respectively to the Rāṇāyanīya and the Kauthuma Śākhās of the Sāma-Veda. Their comparison leads us to great antiquity, when (excepting slight differences in ritual), their text was one. We are forced to this conclu-

1 When tradition fails him, he allows a free play to his fancy.

2 Rāmakṛṣṇa Dīkṣita (alias Nānābhāī, son of Dāmodara Tripāṭhī), another commentator of Lāṭ., does not always follow Agnisvāmin.

sion by the verbal identity in the vast majority of the sūtras. Their sequence also is mostly uniform. Even in the matter of division of chapters (adhyāyas in Dr., prapāṭhakas in Lāṭ.) the agreement is very close. In each case a chapter is divided into 12 sections[1]. But of greater significance are the variations themselves. The variations consist in additions, paraphrases and change in sequence. The additions are numerous in the Dr., and they exceed the other variations. Now, the additions generally are of the nature of adscripts, marginalia or interlinear glosses.[2] They can be thrown out without affecting the smoothness of the context. When one is a paraphrase of the other, or there is a change in sequence, the process of evolution does not reveal itself so readily. On the whole the Lāṭ. has preserved a purer text.

1 The Dr. has also a secondary division into paṭalas.

2 E. g. Dr. 11. 1. 8 या स्वयंवक्रा सेन्द्रणता explains इन्द्रणता of the preceding sūtra.

[1]रोहितेनानडुहेनोत्तरलोम्ना चर्मणापिहितः स्यात् ॥ १ ॥

पूर्वोक्तो वाणश्चर्मणा छादितः स्यात् । वाणस्यास्य बिलं चर्मणा छादये-दित्यर्थः ॥

तस्य[2] दशसु पश्चाच्छिद्रेषु दशदश तन्त्र्यो बद्धाः स्युर्मौञ्ज्यो दार्भ्यो वा ॥ २ ॥

तस्य वाणस्य पश्चाद्भागे मुखादितरस्मिन् प्रान्ते दश छिद्राणि कृत्वा प्रत्येकं[3] दशदश तन्तवो बद्धाः स्युः । मौञ्ज्यो[4] वा दर्भमया वेति ॥

त्रिष्विति शाण्डिल्यः । चतुस्त्रिंशन्मध्यमे त्रयस्त्रिंशतावभितः ॥ ३ ॥

त्रीण्येव छिद्राणि कृत्वा मध्यमे चतुस्त्रिंशत्तन्तूनितरयोस्त्रयस्त्रिंशताविति । एवं शततन्तुर्वाण इति ॥

पुरस्तादेकैकशस्तास्त्रेधं विभज्य भूर्भुवः स्वः[5] इत्येताभिः पृथगुत्तरोत्तर्युदूहेत् ॥ ४ ॥

एकैकश उदूहेदित्यन्वयः । बन्धनात् प्रागेव तास्त्रेधं समं[2] विभज्य मध्यमं भागमेकाधिकं कृत्वा प्रतिवर्गं व्याहृतिभिः प्रत्येकं तन्तूनुदूहेत् । छिद्रेषु तन्तूनासूज्योर्ध्वमुदूह्य बिले बध्नीयादित्यर्थः । उत्तरोत्तरीति कोऽर्थः । बाह्यच्छिद्रे प्रथमं कुर्यान्मध्यमे द्वितीयं ततोऽभ्यन्तरे तृतीयमपवर्गमिति । तेन प्रथमां व्याहृतिमुक्त्वा बाह्ये छिद्रे त्रयस्त्रिंशत्तन्तून् बध्नीयात् । प्रतितन्तुमावर्तयेत्[6] ।

1 Gb लो°

2 Gb om.

3 Gb adds तेषु

4 Gb मौंज्यो

5 DcGb सुवर्

6 Gb तंतुमंत्रमावर्त्तयेते

एकैकश उदूहेदिति वचनात् । एवं मध्यमे छिद्रे द्वितीयया व्याहृत्या तृतीये छिद्रे तृतीयया व्याहृत्येति । यदा पुनर्दश छिद्रेषु दशदश तन्तवस्तदापि त्रेधं विभज्य व्याहृतिभिरुदूहेदिति ॥

तमभिमृशेत्—वदो वद वदा वदी वदो वदोरुः[2] पृथुः[3] सुगः सुगन्त्वः[4] कर्मः करणः[5] करः करस्युरभीषाट् चाभीषाही चाभिमातिहश्चाभिमातिहा च सासहिश्च सहीयांश्च सहस्वांश्च सहमानश्चोद्वयाश्च बृहद्वयाश्च[8] सवयाश्च[9] वृद्धवयाश्चैन्द्रीं वाचं बृहतीं विश्वरूपां शतायुषीं[10] प्रवद देव वाण इति ॥ ५ ॥

तं वाणमेवं कृत्वा मन्त्रेणाभिमृशेदिति ॥

शिथिलांस्तन्तूनायच्छेत्—

एभिर्नो वाण तन्तुभिः शतं राद्धीरिहावद[11] ।

अरात्स्म सर्वे ऽतार्ष्म[12] जीवा ज्योतिरशीमहि ॥

इति ॥ ६ ॥

यदि तन्तवः शिथिलाः स्युश्छिन्नाः स्युस्तदा तान् सर्वान् समं[13] संधाय[14] पुनरायच्छेन्मन्त्रेणेति ॥

वाक् सर्वं[15] मनो ज्योतिर्मा नो[16] भद्रः इति जपित्वा वादयेदिन्द्रणतयेषीकया वेतसशाखया च सपलाशया ॥ ७ ॥

आ नो भद्रः इति मन्त्रपाठः । मानः इत्यपपाठः । सपलाशया वेतसशाखया इषीकया च वाणं वादयेदिति[17] ॥ इन्द्रणतयेति पदस्य स्वयमेवार्थमाह—

मूलतो या स्वयंवक्रा सेन्द्रणता ॥ ८ ॥

1 Dcdef om. the second दश
2 Gb वदो यः
3 Reuter पुथुः (without variants)
4 DbGb सुगंधः
5 Db वरुणः, Gb करुणः
6 Dab चाभि°
7 Dce om.
8 Gb om.; Dc समवयाश्च
9 De बृहद्व° (= Lāṭ.)
10 DceGb °षं
11 Db राद्धिमिहा°, Gb °रिहावत
12 Db तारिषु, Dce °रिष्म, Gb तारिषष्ठ
13 Gb om. सर्वान् समं, Df om. समं
14 Gb समाधाय
15 Gb सर्वा
16 Dab ज्योतिरा नो
17 Gb om. इति

या मूलप्रदेशे स्वयमेव वक्रा भवति[1] सेन्द्रणता। इन्द्रेण नता इन्द्रणता दैवान्नतेत्यर्थः[2] ॥

प्राणाय त्वा [PB 5.6.14] इत्यूर्ध्वमुल्लिखेत् अपानाय त्वा [l.c.] इत्यवाञ्चम् ॥ ९ ॥

छिद्रप्रदेशादारभ्य यावन्मुखमूर्ध्वमुल्लिख्य वादयेत्। तथा मुखप्रदेशादारभ्य अपानाय त्वा इत्यवाञ्चमवलिखेदिति ॥

व्यानाय त्वा[3] [l.c.] इति त्रिः संल्लिख्योदञ्चं वाणं प्रोहेद्ब्राह्मणमुक्त्वा इममुल्लिखन्नास्व इति ॥ १० ॥

व्यानाय त्वा इति त्रिः[4] संल्लिख्य इममुल्लिखन्नास्व इति कंचिद्ब्राह्मणमुक्त्वा तस्य हस्तयोरुदञ्चं वाणं प्रोहेदिति ॥

प्रथमः खण्डः ॥१॥ ॥५॥

---

आहत दुन्दुभीन् प्रवदन्तु वीणाः इति ब्रूयात् ॥ १ ॥

आहत आघ्नत दुन्दुभीनिति प्रैष इति ॥

अलाबुवीणा[5] वक्राकपिशीष्ण्यौ च पूर्वस्यां द्वारि बहिःसदसम् ॥ २ ॥

अलाबुवीणा प्रसिद्धा। वक्रा नाम वीणाविशेषः। तथा कपिशीर्ष्णी च। तास्तिस्रो वीणाः सदसः पूर्वस्यां द्वारि बहिःसदसं वीणावादिनो वादयेयुरिति ॥

वक्राकपिशीष्ण्यौ दुन्दुभींश्च प्रतिमन्त्रयेत—
यो वक्रायां कपिशीष्ण्यां[6] दुन्दुभौ[7] यश्च वाद्यम्।
घोषो यो[8] महतो महांस्तेन नो राद्धिमावद ॥
इति ॥ ३ ॥

आवदेत्येकवचनं वाग्देवताभिप्रायमिति ॥

महावीणापिशीलवीणे चापरस्यामन्तरिति गौतमशाण्डिल्यौ बहिरिति धानंजय्यः ॥ ४ ॥

1 Dd adds इति
2 Gb दैवन॰
3 DdGb repeat व्यानाय त्वा (=Lāṭ.)
4 Gb त्रिभिः
5 DeGb ॰णां (=Lāṭ.)
6 DbceGb ॰ष्ण्यौ
7 Gb adds च
8 Gb घोषयोर्

अपरस्यां सदसो ऽर्धेऽन्तर्बहिर्वेदि[1] वीणाद्वयं वादयेयुः ॥ तयोश्च प्रति[2]-मन्त्रणं कार्यमित्याह—

अलाबुवीणापिशीलवीणे च प्रतिमन्त्रयेत—

अलाबुवी पिशीली[3] च यं मन्त्रमधिजग्मतुः ।

तेनेदमुपगायतां ते साम महयिष्यतः ॥

इति ॥ ५ ॥

स्पष्टमिति ॥

पश्चिमेनोपगातॄन् द्वेद्वे एकैका पत्नी काण्डवीणां पिच्छोरां[4] च व्यत्यासं वादयेत् ॥ ६ ॥

सत्त्रिणां यजमानानामेकैका पत्नी पश्चिमेनोपगातॄनासित्वा द्वेद्वे वीणे व्यत्यासं वादयेत् । प्रथमं काण्डवीणां ततः पिच्छोरां[5] पुनरप्येवमेव सर्वा इति ॥

उपमुखं पिच्छोरां[6] वादनेन काण्डमयीम् ॥ ७ ॥

उपमुखं स्थापयित्वा मुखमारुतेन पिच्छोरां[6] वादयेयुः वादनदण्डेन[7] काण्डमयीमिति ॥

ता अपघाटिला इत्याचक्षते ॥ ८ ॥

ताः पत्नीभिर्वाद्यमाना अपघाटिला इत्याचक्षते । अनेन तं पत्न्यो ऽपघाटिलाभि-रुपगायन्ति । आर्त्विज्यमेव तत्[8] पत्न्यः कुर्वन्ति [PB 5.6.8] इति ब्राह्मणं व्याख्यातमिति ॥

ताः[9] प्रतिमन्त्रयेत—

यां पत्न्यपघाटिलां मृदुकं वादयिष्यति ।

सारातिमपबाधतां द्विषन्तं तैजनित्वक् ॥

इति ॥ ९ ॥

ता अपघाटिलाः प्रतिमन्त्रयेतेति ॥

1 Dcd °बहिर्वा, Gb om. वेदि
2 Gb om. प्रति
3 Da अलाबुवी पिशीलीवीणे, Df अलाबुवरिण-पिशीलवणे, Gb अलाबुवीणा पिशिलि (cp. Lāṭ. and com.)
4 DbGb °नोद्°
5 Df °लां
6 DdfGb °लां
7 Gb वादनेन
8 Dce °मेतत् for °मेव तत्
9 Gb तां

सर्वम-वीक्षमाणो जपेत्—

आक्रन्दा उलूलयः प्रक्रोशा यच्च चेष्टितम्[1] ।

सर्वा[2] सत्रस्य सा राद्धिस्तथेदं साम गीयते ॥

इति ॥१०॥

सर्वमपघाटिलास्ततोऽन्यांश्च वीणादुन्दुभींश्चानुवीक्षमाणो जपेदिति ॥

जपेदेव—सुपर्णोऽसि[3] गरुत्मान् प्रेमां वाचं वदिष्यामि बहु करिष्यन्तीं बहु करिष्यन् स्वर्गमयिष्यन्तीं स्वर्गमयिष्यन् मामिमान् यजमानान्

इति ॥ ११ ॥

पुनरपि सुपर्णोऽसि गरुत्मान् इति मन्त्रं जपेदिति ॥

द्वितीयः खण्डः ॥२॥ ॥६॥

---

ब्राह्मणोऽभिगरः पूर्वस्यां सदसो द्वारि प्रत्यङ्मुख उपवि ेद् वृषलोऽपगरोऽपरस्यां प्राङ्मुखः ॥ १ ॥

यः सत्रिणो यजमानान् प्रशंसति सोऽभिगर इत्युच्यते । स ब्राह्मणः पूर्वस्यां द्वारि प्रत्यङ्मुख उपविशेत्[4] । अपरस्यां द्वारि वृषलोऽपगरः प्राङ्मुख उपविशेन्निन्दार्थम् । यो निन्दति सोऽपगर इत्युच्यते ॥

स ब्रूयात्—नारात्सुरिमे सत्रिणः [PB 5.9.14] इति ॥२॥

स[6] वृषलो निन्दन् ब्रूयात्—नारात्सुरिमे सत्रिणः इति । असिद्धा इत्यर्थः ॥

अरात्सुः [l. c.] इत्यभिगरः ॥ ३ ॥

अभिगरो ब्राह्मणः अरात्सुः इति ब्रूयात् । संसिद्धा इत्यर्थः ॥

दक्षिणेन मार्जालीयमर्योऽन्तर्वेदि दक्षिणामुखास्तिष्ठे ॥ ४ ॥

अर्यः स्वामिवैश्ययोः [3.1.103] इति पाणिनिस्मृतेरर्यो वैश्य इति ॥

1 DbdGb चेष्टति (= Lāṭ.)

2 Gb सर्वे-

3 DcdeGa स्मि (= Lāṭ.); Df corrects सि to स्मि

4 Dce om. इति

5 Gb adds in margin सत्रिणः प्रशंसिषतुं

6 Dce om.

बहिर्वेदि शूद्र उदङ्मुखः ॥ ५ ॥

स्पष्टमिति ॥

अर्याभावे यः कश्चार्यो वर्णः ॥ ६ ॥

अर्याभावे यः कश्चार्यस्त्रैवर्णिकः[1] स्यादिति ॥

तौ श्वेतं परिमण्डलं चर्म व्यायच्छेतां शूद्रः पूर्वः ॥ ७ ॥

तावर्यश्च शूद्रश्चान्योऽन्यं श्वेतं चर्म व्यायच्छेताम् । शूद्रः प्रथमं व्याय-च्छेदिति ॥

पूर्वेणाग्नीध्रीयं ब्रह्मचार्यन्तर्वेद्युदङ्मुखस्तिष्ठेद्बहिर्वेदि पुंश्चली[2] दक्षिणामुखी ॥ ८ ॥

स्पष्टमिति ॥

सा ब्रूयात्— दुश्चरितिन्नवकीर्णिन् इति ॥ ९ ॥

सा पुंश्चली[3] वेश्या ब्रह्मचारिणं प्रति ब्रूयात्—हे दुश्चरितिन् हे अवकीर्णिन् इति । दुश्चरितं ब्रह्मचर्यस्खलनमिति ॥

धिक् त्वा जाल्मि पुंश्चली ग्रामस्य मार्जनि पुरुषस्य पुरुषस्य[4] शिश्नप्रणे-जनि इति ब्रह्मचारी[5] ॥ १० ॥

ब्रह्मचारी पुंश्चलीं प्रति ब्रूयात्—धिक् त्वा जाल्मि इति ॥

एवमा[6] तृतीयं व्यत्यासम् ॥ ११ ॥

एवमेव पुनः [7]पुंश्चली ब्रूयात् पुन[7]र्ब्रह्मचारी पुनरप्येवं कुर्याताम्[8] । आ तृती-यमिति यावत् तृतीयं पर्यायं त्रिरित्यर्थः ॥

सर्वेषां कर्मणि निष्ठिते तदेवाभिगरास्त्रिर्ब्रूयात् ॥ १२ ॥

सर्वेषामभिगरप्रभृतीनां कर्मणि यथोक्ते कृते पुनरप्यभिगरास्त्रिर्ब्रूयात्[8]— अरात्सुरिमे सत्त्रिणः इति ॥

अवसृज्य शूद्रः प्रद्रवेत् ॥ १३ ॥

अथ शूद्रः परिमण्डलं चर्म विसृज्य धावेदिति ॥

1 DdGb °वर्णिकः

2 DacGb पूं°

3 Dc पूं°

4 Only DbcdGb repeat पुरुषस्य

5 Dce om.; others add इति

6 Db ब्रह्मचार्यं°

7–7 Dd पुंश्चली ब्रह्मचारी पुनरिति

8 Gb °गरस्तदेव त्रिर्ब्रू°

तं तेनैवावक्षिणुयात् ॥ १४ ॥

तं शूद्रं तेनैव परिमण्डलेन चर्मणार्यो वर्णोऽवक्षिणुयाद्[1] विध्येत् ताडयेदिति ॥

यथाभिप्रेतमितरां ब्रह्मचार्याक्रोशेत् ॥ १५ ॥

अथ ब्रह्मचारी [2]पुंश्चलीं यथाभिप्रेतमाक्रोशेत् । न पूर्वोक्तमात्रेण किं त्वधिकमपि यथाभिप्रेषणं कथयेदिति ॥

पश्चिमेनाग्नीध्रीयं बहिर्वेदि परिश्रिते मिथुनौ संभवेतां यौ वर्णौ लभेरन् ॥ १६ ॥

[3]यौ वर्णौ लभेरन्निति[3] सत्रिणस्तौ मिथुनौ संभवतः । यदि कश्चिद् ब्राह्मणः ब्राह्मणी च कार्म[4]वृत्तौ लभ्येते तदा तौ संभवतः । अथ यदि क्षत्रियौ यदि[5] वैश्यौ यदि वा शूद्रौ नात्र वर्णनियम इति ॥

गृहपतेर्दास्यो ऽभीष्टा वा नवानु[6]दहरणा- पूरयित्वा प्रदक्षिणं मार्जालीयं परीयुः हैमहा इदं मध्विदं[7] मधु इति वदत्यः ॥ १७ ॥

गृहपतेर्दास्यस्तस्याभीष्टा वा याः काश्चित् कुमार्यो नवानुदकुम्भानद्भिः[8] पूरयित्वा मार्जालीयं परिगच्छेयुः । परिनृ[9]त्यन्ति इति कल्पान्तरमिति ॥

पञ्चावरार्ध्याः पञ्चशतं परार्ध्याः पञ्चविंशतिर्वा ॥ १८ ॥

स्पष्टमिति ॥

ताभ्यो वीणां[10] वादयेयुः ॥ १९ ॥

तासां दासीनामर्थे ऽपि वीणा वादयेयुः । तदीयनृत्याङ्ग[11]त्वेनेत्यर्थः ।

सर्वासु स्रक्तिषु दुन्दुभीना[12]बध्नीयुः ॥ २० ॥

महावेदेः सर्वासु स्रक्तिष्वित्यर्थः ॥

1 Dce °क्षिणीयाद्

2 Dc पूं°

3–3 Gb om.; Df repeats these words.

4 Dce एककाम°

5 DcdGb add वा

6 DfGb नवानुदका°

7 Dce om.; Gb adds इति

8 Dce om. अद्भिः

9 Gb परिद्रुत्य°

10 Gb पवीणा

11 Dce तदीयं नृत्यं नृत्यांग°, Dd तादियं°, Gb तादियं नृत्तानाङ्ग°

12 Dce °नां

उत्तरोचा वाचो व्याहारयेयुर्यावतीरधिगच्छेयुः ॥ २१ ॥

अस्मिन् स्तोत्रे पूर्वोक्ताः सर्वा वाच उत्तरोत्तरमात्रायुक्ता ब्रूयुः । यावत्यो-च्चैर्मात्रया युक्ता वक्तुं क्षमास्तावत्या मात्रया युक्ता ब्रूयुः । यथा हैमहा इदं मध्विदं[2] मधु इत्युत्तरोत्तरमुच्चगानम् । तथा उत्क्रोदं यजमानाः कुर्वते इति शाखान्तरोक्तक्रोदा-दिकर्मुच्चैरुच्चैरिति ॥

घोषांश्च ॥ २२ ॥

दुन्दुभिघोषान् वीणाघोषांश्च सर्वानपि यावतो ऽधिगच्छेयुस्तावतो ऽत्युच्चै-स्तरान् कुर्युरिति ॥ एवं शिल्पान्युक्त्वा तदनुष्ठानकालमाह—

हिंकारमन्वभिगरप्रभृतयः कृत्वा यथार्थं स्युः ॥ २३ ॥

स्तोत्रोपक्रमे हिंकारवेलायामभिगरप्रभृतयः स्वंस्वं कर्म कृत्वा यथार्थं गच्छेयुः । ब्राह्मणो ऽभिगरः पूर्वस्यां [sūtra 1] इत्यारभ्य मैथुनान्तं कर्म [sū. 2] यदुक्तं तत् स्वंस्वं कर्म । तथा संनद्धो राजापि हिंकारवेलायामपि[6] प्रदक्षिणं देवय-जनं परीयात् [10. 2. 13] इति प्रैषार्थं कृत्वा यथार्थं गच्छेदिति ॥

आ स्तोत्रान्तात् कुम्भिन्यः सर्वे च घोषाः ॥ २४ ॥

कुम्भिन्यो दास्यो वीणादुन्दुभिघोषाश्च हिंकारप्रभृति यावत्स्तोत्रसमाप्त्य-नुवर्तते तेषामुपगानरूपत्वात् । केचित् तु हिंकारात् पूर्वमेव घोषाः आहत दुन्दुभीन् प्रवदन्तु वीणाः [11. 2. 1] इति यथाप्रैषमुपक्रम्य प्रवर्तन्त इत्याहुरिति ॥

॥ तृतीयः खण्डः ॥३॥ ॥७॥

---

अथेदानीं सुपर्णो ऽसि गरुत्मान् [11. 2. 11] इति जपानन्तरं राजनेन पञ्च-विंशेन स्तोतव्यम्[9] । अनाम्नातपर्यायश्च पञ्चविंशस्तोमः । तस्य पर्यायक्लृप्तौ[10] जातिसंहारो[11] [17. 2. 25] युग्मायुक्संहार [17. 1. 27] आवापश्चेति [17.

1 Gb adds अतिवोच्चैस्तरामित्यर्थः
2 Gb om.; Dd adds मधिदं
3 Dce य°
4 Gb °न्तरोक्तमुत्क्रोदादिक°
5 Dcdf °स्तरां
6 Dd °मनु, Gb °मेव
7 Ddf °याद्
8 Dcdef °विंश-
9 Ddf स्तोत्रीयं
10 Dce °क्लृप्तो
11 Gb सूत्रकारा

1. 3] त्रीन् पक्षान् वर्धमानपटले [pat. 17] वक्ष्यति । दशरात्रिकेभ्य एकया ज्यायःसु [17. 3. 4] इत्यादिना तत्रावापपक्षे कुत्रावाप इत्यपेक्षायामाह—

पञ्चविंशे चतुर्विंशस्योत्तमे पर्याये परिचरायामावपेदिति[1] गौतमः॥१॥

उत्तमे पर्याये परिचरायां[2] मध्यमायामृच्यावपेत्। मध्यमां द्विर्गायेदित्यर्थः ॥

आवापस्थान इति धानंजय्यः ॥ २ ॥

उत्तमे पर्याये प्रथमायामावापस्थान एवावपेदिति ॥

प्रथमस्यावापे इति शाण्डिल्यः ॥ ३ ॥

प्रथमस्य पर्यायस्यावापस्थान इत्यर्थः ॥

चतुर्विंशेन वा स्तुत्वा मध्यमामहिंकृतां तृचस्य प्रस्तुयात् ॥ ४ ॥

अथवा चतुर्विंशेन स्तोमेनाविकृतेनैव तृचं समाप्य पुनर्मध्यमामृचं हिंकाररहितां प्रस्तुयात्। प्रस्तुत्य सकृद्गायेदित्यर्थः ॥

स आस्कन्दो नाम ॥ ५ ॥

तस्य बहिःपर्यायैर्गानस्यास्कन्द इति संज्ञा । बहिःपर्यायमास्कन्दनादिति । स्रवनात् संज्ञाकरणं च व्यवहारार्थम् । आस्कन्दं तु गौतमश्चत्वारिंश इति ॥

तं न कुर्यादिति शाण्डिल्यायनः ॥ ६ ॥

न सार्वत्रिको ऽयं निषेधः । आस्कन्दस्य श्रुत्युक्तत्वात् । तेन महाव्रते तमास्कन्दं न कुर्यादित्यर्थः ॥

उत्तमायां स्तोत्रीयायां प्रस्तुतायां पादावुपावहरेत् ॥ ७ ॥

राजनस्य साम्न उत्तमायां प्रस्तुतायामात्मनः पादावुपावहरेदिति ॥

सह निधनेन भूमौ प्रतिष्ठापयेत् ॥ ८ ॥

निधनोच्चारणवेलायां पादौ भूमौ प्रतिष्ठापयेत् । ततः पूर्वमाकाश एव स्थापयेदिति ॥

आह्रियमाणे भक्षे प्रतिलोमैरारोहणीयैरवरुह्य जपेत्—

मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् ।

पिपृतां नो भरीमभिः ॥

1 Gb परिचाया वापस्थान एवावपेदिति
2 Gb °चाराया
3 Dce °चा°
4 Dcd add-स्थान( = Lāṭ.)
5 Gb °नैव for °न वा
6 DcdGb पयार्य

इति ॥ ९ ॥

अध्वर्युभिराह्रियमाणे नाराशंसादिभक्षणे प्रतिलोमैरारोहणमन्त्रैरवरोहेत्। अवरोहन्तु अवरोहामि[1] इति च मन्त्रसंनामः कार्यः। अवरुह्येति विधानादन्यथा मन्त्रलिङ्गविरोधाच्च। तद्यथा—विश्वे त्वा देवा आनुष्टुभेन छन्दसावरोहन्तु तानन्ववरोहामि इत्युपक्रम्य वसवस्त्वा इत्येवमन्तैः। अवरोहणमन्त्रातिग्राह्यभक्षणमप्युद्गातृभिः कार्यं स्तुत्वा पृष्ठेन [9.2.11] विषुवद्व्रतयोश्च [9.2.12] इति पूर्वमुक्तत्वादिति[3] ॥

अथ आसीनाः शेषेण स्तुवीरन् ॥ १० ॥

अह्नः शेषेण वामदेव्यप्रभृतिना स्तोत्रेणाथ एवासीनाः स्तुवीरन्। आसन्दीकूर्चान् वर्जयेयुरिति। एवं महाव्रतकथा[4] समाप्ता ॥

अथोदयनीयमतिरात्रं प्रत्याह—

उदयनीये ऽतिरात्रे संस्थिते ऽवभृथमभ्यवेयुः ॥ ११ ॥

सिद्धमेवैतदुत्तरविवक्षार्थं वचनमिति ॥

अनुपमज्जन्तः पाणिभिस्तु संधावेरन् ॥ १२ ॥

अप्सु शिरस उपमज्जनमकुर्वन्तः पाणिभिः शरीरमन्योऽन्यं शोधयेयुरिति ॥

यस्यात्र पत्नी स्यात् पृष्ठं तया व्युद्धावयेत् ॥ १३ ॥

यस्यात्र यजमानस्य पत्नी विद्यते स तया पत्न्या स्वदेहे[6] पृष्ठवंशं शोधयेत्। कर्मव्यतिहारे विशब्दः। पत्न्याश्च देहं[6] यजमानः शोधयेदिति ॥

तानुन्नेतोदानयेत् ॥ १४ ॥

तान् सत्रिण उन्नेतावभृथादुदानयेत्। तीरप्रदेशे[7] नयेदिति ॥

उदेत्य गृहपतिः सोमोपनहनं परिदधीत ॥ १५ ॥ अहतानि वसनानीतरे[8] ॥ १६ ॥

स्पष्टे इति ॥

अभ्युक्षणप्रभृति समापयेयुः ॥ १७ ॥

1 Gb °हानि
2 Gb °न्वधि°
3 Gb वचनात् for पूर्वमुक्त°
4 Gb °व्रतकार्या
5-5 Gb आसन्दीकूर्चे अवनह्य वामदेव्यादि स्तुवीरन्
6 Gb om.
7 Dd °देशं
8 Db वासांसीतरे

अवभृथेष्टौ संस्थितायाम् अवभृथ निचुम्पुण [6.4.8] इत्यभ्युक्षणप्रभृति[1] कर्मशेषं तस्मिन्नहनि समापयेदिरिति ॥

येनेतो गच्छेयुरन्येन[2] प्रत्याव्रजेयुः[3][4] पाप्मनो व्यतिषङ्गाय ॥ १८ ॥

इतो देवयजनाद् येन पथावभृथं गच्छेयुस्ततो ऽन्येन मार्गेणावभृथात् प्रत्याव्रजेयुः । त्यक्तेन पापेनासंबन्धार्थम् । पूर्वस्मिन् हि[5] मार्गे पाप्मा तिष्ठतीति मन्यत[6] इति ॥

अनूबन्ध्यवपायां हुतायां दक्षिणे वेद्यन्ते केशश्मश्रूणि वापयेत् ॥ १९ ॥

स्पष्टमिति ॥

तस्मिन् संस्थिते प्राञ्च उदञ्चो वा गत्वा पृथगुदगवसानीयाभिरिष्टिभिराहिताग्नयो यजेरन् ॥ २० ॥

तस्मिन्नुदयनीये[8] संस्थिते देवयजनात् प्राञ्च उदञ्चो वा[9] पृथक्पृथगिष्टिभिर्यजेरन्निति ॥

गृहपतिं यजमानमनाहिताग्नय उपासीरन् ॥ २१ ॥

ये पुनरनाहिताग्नयः सत्त्रिणस्तेषामग्न्यभावाद् गृहपतिमुदयनीयेन[10] यजमानमुपासीरन् । अत एव वचनादनाहिताग्नेरपि सत्त्रमस्तीति गम्यते । आश्वलायनो ऽप्याह — दीक्षणायनमग्नीनाम् [4. 1. 10] इति ॥

तद्देवत्यैः स्थालीपाकैर्यजेरन्निति धानंजय्यः ॥ २२ ॥

श्रौताग्न्यभावे ऽप्यौपासनाग्नौ स्थालीपाकैरुदयनीयेष्टिदेवत्यैरनाहिताग्नयो यजेरन्निति ॥

संवत्सरं संवसेयुः[11] ॥ २३ ॥

समाप्ते[12] हि[13] सत्त्रे[14] सत्त्रिणः संवत्सरं सहैकत्र वसेयुरिति ॥

1 Gb adds यदुक्तं
2 Db धिग॰
3 Db adds वा
4 Dd adds इति
5 Df om. हि ; Dd puts it after मार्गे
6 Ddf मन्यंत
7 Gb अनु॰
8 Gb ॰न्नुदवसानीये
9 Gb adds गत्वा
10 Gb ॰मुदसानिया
11 Df om. this sūtra and its com.
12 Reuter समासे
13 Dce पि, Dd त्रुत्तः षि for हि
14 Dce सत्त्रिणे

द्वादशरात्रमहोरात्रौ[1] वा ॥ २४ ॥

स्पष्टमिति ॥

यावद्वा सुनुयुर्यावद्वा सुनुयुः ॥ २५ ॥

यावन्तं कालं सत्रे सुनुयुस्तावन्तं कालम् । त्रयोदशरात्रे समाप्ते त्रयोदशरात्रं संवसेयुः । तथा च द्वादशरात्रादावपि तावन्तं कालं सह वसेयुरिति ॥

चतुर्थः खण्डः ॥४॥ ॥८॥

एकादशः पटलः ॥११॥

द्राह्यायणकृते सूत्रे[2] दीपे धन्विविनिर्मिते[3] ।
द्वितीये दशके वृत्तः[4] प्रथमः पटलो ऽधुना ॥

1 DbGb °त्रं

2 Gb om.

3 Gb धन्विना च विनिर्मिते

4 Gb दीपे

अथ सर्वयज्ञेषु ब्रह्मत्वं विधातुमुपक्रमते—

सर्वत्र ब्रह्मा दक्षिणतः ॥ १ ॥

सर्वेष्वपि श्रौतस्मार्तेषु कर्मसु ब्रह्मा दक्षिणतो[1] भवेत् । न [illegible]नरुद्गात्रादिवत् । श्रौतेष्वेव ब्रह्मणः प्रवृत्तिरित्यर्थः । तथा[2] तेषु कर्मसु क्रियमाणेषु नित्यं दक्षिणतो भवेदिति । द्वयमप्यत्र विवक्षितमिति ॥

उदङ्मुखः [illegible]र्याद्धोमेभ्यो ऽन्यत् ॥ २ ॥

उपवेशनप्रभृति ब्रह्मणो यत् कृत्यं तत् सर्वं होमव्यतिरिक्तमुदङ्मुख एव कुर्यात् । [3]होमांस्तु प्राङ्मुख एव कुर्यात्[3] । प्राङ्मुखकरणं चानादेश इति सामान्यविधानादिति ॥ प्रथमं पाकयज्ञेषु ब्रह्मत्वं विधास्यन् पाकयज्ञपदं व्याचष्टे—

पाकयज्ञा इत्याचक्षत एकाग्नौ यज्ञान् ॥ ३ ॥

एकाग्निरौपासनः । तत्र क्रियमाणान् यज्ञान् पाकयज्ञा इत्याहुरिति ॥

तेषां होष्यत्सु तूष्णीमुपविशेत् ॥ ४ ॥

तेषामर्थे ब्रह्मणैतत् कृत्यम् । किं तत् । होष्यत्सु कर्तृषु तूष्णीमुपविशेदिति । श्रौतेषु कर्मसु प्रायेण मन्त्रत [4]उपवेशनात् तन्निवृत्त्यर्थ[4]मिह तूष्णीमिति वचनम् । यद्वा तूष्णीमिति वाग्यमनविधिरिति ॥

हुते यथार्थं स्यात् ॥ ५ ॥

होमे कृते यथार्थं स्यात् । आसीत वा गच्छेद्वेत्यर्थः ॥

शूलगवे च बलीन् ह्रियमाणाननुगच्छेत् ॥ ६ ॥

शूलगवं[5] नाम गवां पोषणार्थम[6]ध्वर्युबह्वृचैरुक्तं कर्मेति ॥

1 Gb om.

2 Dce तेषां

3–3 Dcdef om.

4–4 Dce उपवेशनार्थं नि(De adds य)त्य°

5 Dce °वां

6 Dcdf पोषार्थम°

निधीयमानानां दक्षिणतः[1] स्थित्वा निहितेष्वप उपस्पृश्यानवेक्षं[2] प्रत्याव्रजेत् ॥ ७ ॥

निधीयमानानां बलीनां दक्षिणतं इत्यर्थः । अनवेक्षमिति अवेक्षणमकृत्वे-त्यर्थः ॥

तूष्णीं पाकयज्ञे दक्षिणाम् ओम् इति वा प्रतिगृह्णीयात् ॥ ८ ॥

स्पष्टमिति ॥

पशुरेव पशोर्दक्षिणा ॥ ९ ॥

पशुहविषः पाकयज्ञस्याष्टकादेः पशुरेव दक्षिणेति ॥

पूर्णपात्रं स्थालीपाकस्य ॥ १० ॥ उभयोर्यथोत्साहं[3] वा ॥ ११ ॥

स्पष्टे इति ॥

न वितानं पृष्ठतः कुर्वीत ॥ १२ ॥

न वितानं श्रौताग्निविहारदेशं[4] पृष्ठतः कुर्यादिति ॥

येन यज्ञाङ्गेन[5] संयुज्येत तदभ्यावर्तेत ॥ १३ ॥

अध्वर्य्वादिभिः सह कर्मकरणे सति तदानीं येन यज्ञाङ्गेन ब्रह्मा संयुज्यते[6] संयुक्तो भवति तद्यज्ञाङ्गमभ्यावर्तेत[7] । अग्नीन्[8] पृष्ठतः कृत्वापि तदभिमुखः स्यादित्यर्थः ॥

कर्मादिषु सर्वेष्वध्वर्युसंप्रैषमागमयेत्[9] ॥ १४ ॥

कर्मणामुपक्रमेष्वध्वर्युणा प्रार्थनं कारयेत् । अत्र भवता ब्रह्मत्वं कार्यमित्य-ध्वर्युप्रार्थित एव ब्रह्मत्वं कुर्यात् । नान्यथेत्यर्थः ॥

पूर्वया द्वारानादेशे[10] प्रविशेत् ॥ १५ ॥

स्पष्टमिति ॥

अग्न्याधेये दक्षिणया द्वारा प्रपद्य चातुष्प्राश्यं निर्वप्स्यत्सु तूष्णी-मुपविशेत् ॥ १६ ॥

1 Gb °णस्यां
2 Dbcde °पेक्षं (=Lāt.)
3 Df om.
4 Dcde °देशे
5 Gb °न्तेन
6 Gb om.
7 Dcde °वर्ततेति; Dce add आसातः
8 Dce अग्निं
9 Dcde °गमयेतेति
10 Gb °देशं

अग्न्याधेय इत्यधिकारः। चातुष्प्राश्यं ब्रह्मौदनः। चत्वारो हि तद् ब्राह्मणाः प्राश्नन्तीति[1]। तन्निशायां निर्वपन्ति। तदानीं वाग्यत उपविशेदिति॥

**निरुप्ते यथार्थं स्यात्॥ १७॥**

स्पष्टमिति॥

**तदुद्धरिष्यत्स्वेवमेव॥ १८॥**

तच्चातुष्प्राश्यं ब्रह्मौदनं पात्रेषूद्धरिष्यत्स्वध्वर्युष्वेवमेव तूष्णीमुपविशेदिति॥

**तच्चेदनृत्विग्भिः प्राशयेयुस्तण्डुलानादायापविध्येयुः—[3]निष्ट आविद्धं[3] कृन्तानि[4] इति॥ १९॥**

यदि[5] चातुष्प्राश्यमृत्विग्व्यतिरिक्तैः कैश्चित् प्राशयेयुरध्वर्यवस्तदा तस्मादोदनादृत्विजस्तण्डुलानादाय बहिर्निरस्येयुः [6]निष्ट आविद्धम्[6] इति मन्त्रेण। तस्य चायमर्थः—हे यज्ञ तवाविद्धं शल्यं निष्कृन्तानीति। तस्याविद्धं निरकृन्तन् यवेन संमितम् [TS 2.6.8.3-4] इति तैत्तिरीयकैः प्राशित्रमधिकृत्योक्तः। तद्वदेतदिति॥

**अथान्यान् निदधीरन्॥ २०॥**

यतः प्रदेशात् तण्डुलादानं तत्र तण्डुलानन्यान् निदधीरन्निति॥

**आधास्यमानस्यारण्योः प्रत्तयोर्यथार्थं स्यात्॥ २१॥**

यदि तस्यामेव निशायामाधास्यते यजमानस्तदा तस्य हस्ते ऽध्वर्युणारण्योः प्रत्तयोर्यथार्थं स्यात्। अथ यदि तत ऊर्ध्वं संवत्सरादिकालेष्वग्न्याधानं[10] तदा प्राशनानन्तरमेव यथार्थमिति॥

**पूर्वाह्णे दक्षिणेनाग्न्यायतनानि गत्वा यत्राग्निं मन्थिष्यन्तः स्युस्तद्दक्षिणतः निरस्तः परावसुः इति दक्षिणा तृणं निरस्येत् [=4.4.11] आवसोः सदने सीदामि इत्युपविशेत् [=4. 4. 12]॥ २२॥**

यस्मिन् दिवसे ऽग्न्याधानं तस्य दिवसस्य पूर्वाह्ण एव गार्हपत्यस्य[11] संभा[12]-

1 Dcd om. इति

2 Dbc °स्तंडु°(=Lāṭ.). तन्दुल occurs later also, but sporadically.

3-3 DbcdeGb नै(DeGb नि)ष्टाविद्धं (=Lāṭ.)

4 Dd शल्यं कृन्तानि

5 Gb मंत्रेण यदि

6-6 DcdGb नेष्टाविद्ध (=Lāṭ.)

7 Gb निकृ°

8 Gb प्रदत्त°

9 Gb adds इति

10 Dc °ग्न्याधेयान्तमाधानं

11 DcdGb om.

12 Gb संहा°

राहरणकाले गार्हपत्यमन्थनदेशस्य[1] दक्षिणतो मन्त्रेण निरसनोपवेशने कुर्यात् । संभाराहरणानुसंधानार्थमिति ॥

भूर्भुवः स्वर्बृहस्पतिर्ब्रह्माहं मानुष ओम् इति ॥ २३ ॥

उपविश्य जपेदिति शेषः । जपश्चोपवेशनाङ्गमिति[2] ॥

एतेनोपविशेद्यजुषेति यत्र स्यात् ॥ २४ ॥

यत्रयत्र यजुषोपविशेदिति विधिः स्यात् तत्र सर्वत्रैतेनोपविशेत् निरस्तः परावसुः इत्यादिना मानुषः[3] इत्यन्तेनेति ॥

अग्निं ह्रियमाणमनुगच्छेत् ॥ २५ ॥

गार्हपत्यमग्निं[4][5] मथित्वा ह्रियमाणमनुगच्छेदिति ॥

निहिते[6] यजुषोपविशेत् ॥ २६ ॥

निहिते आहिते गार्हपत्ये यजुषोपविशेदिति ॥

अत्र प्रथममिति शाण्डिल्यः ॥ २७ ॥

अत्रैव यजुषा प्रथममुपवेशनं न पूर्वाह्ने संभाराहरणकाले मन्थनदेश[7] इति ॥

द्वितीयमिति धानंजय्यः ॥ २८ ॥

पूर्वाह्ने यजुषा प्रथममुपवेशनम्[8] । आहिते गार्हपत्ये द्वितीयं यजुषोपवेशनं कार्यमिति ॥

जाते रथंतरं गायेत् ॥ २९ ॥ वामदेव्यं ह्रियमाणे ॥ ३० ॥ बृहन्निहिते ॥ ३१ ॥

त्रीण्यपि सामानि गार्हपत्याधाने[9] एवेति ॥

सर्वाणि तृचेषु मनसा ॥ ३२ ॥

सर्वाण्यपि सामान्यग्न्याधेयविषयाणि मनसैव गायेत् । अरण्येगेयानां[10]

1 Dce °मंथदेश°, Dd °मंथदेश°, DfGb °मण्डलदेश°

2 Dcd °नाङ्ग इति

3 Dcd मानुष ॐ°, De मानुषोम्

4 Dcd ह्री°

5 Dcde °पत्याग्निं

6 DbGb निधीयमानस्य दक्षिणत स्थित्वा निहिते (=Lāt.)

7 Df मण्डल°, Gb मण्डन°

8 Dcde प्रथमोप°

9 Gb °त्यायतन

10 Dcdef गेयमानानां

तावद् ग्रामे वाचिकगानमयुक्तमिति मानसमेव[1] शास्त्रार्थः। तथैव ग्रामेगेयानामपि[2] गानम्। शास्त्रार्थस्यैक[3]रूप्यार्थमिति[4] ॥

वाचा वा[5] गायेदिति ह्युक्ते[6] किमन्यद्वाचा प्रतीयेत[7] ॥ ३३ ॥

अथवोभयान्यपि वाचैव गायेत्। कुतः। गायेदिति ह्युक्ते[8] वाचा विना किमन्यत् प्रतीयते। वाचेति विनार्थे तृतीया। तेन वाचैव गानमिति ॥

अथापि गानमेवाध्वर्यवे विधीयते न[9] मनसेति ॥ ३४ ॥

अध्वर्युब्राह्मणे ऽपि गानमेव विधीयते न मनसेति ॥ पक्षान्तरमाह—

अपि वा रहस्यान्येव मनसा गायेत्। न ह्यरण्येगेयानां ग्रामे गानं[10] विद्यते ॥ ३५ ॥

अथवारण्येगेयान्येव मनसा गायेत्। तेषां ग्रामे वाचिकगानस्या[11]युक्तत्वात्। ग्रामेगेयं तु वाचैव गायेद्दोषाभावादिति ॥

प्रथमोत्तमयोः स्थाने वारवन्तीययज्ञायज्ञीये इति सामकायनः ॥ ३६ ॥

प्रथमोत्तमयो रथंतरबृहतोः स्थान इत्यर्थः ॥

पूर्वे कल्पे भूयांसीति शाण्डिल्यः ॥ ३७ ॥

पूर्वस्मिन्नेव पक्षे स्थित्वा पुनरप्यधिकानि सामानि शाण्डिल्यो ब्रूत इति[12]॥ तान्येव दर्शयति—

प्रथमः खण्डः ॥ १ ॥ ॥ ९ ॥

---

मन्थिष्यत्स्वरणी आलभ्य अरण्योः [SV 1. 79] इति गायेत् ॥ १ ॥ मथ्यमाने अग्निं नरः [SV 1. 72, 2. 723] इत्येतयो-

1 Dcd add इति
2 Dcdef °गेयमानानाम°
3 Dcd शास्त्रस्यैक°
4 Dcde °रूप्यादिति
5 Gb om.
6 Dbcef om. हि
7 Gb प्रमियत
8 Dcde om. हि
9 Dd प्रतीयते तेन for विधीयते न
10-10 Dbce गानं ग्रामे; Gb adds गातुं after गानं
11 Gb वाचिकं धानंजय्यस्या°
12 Dcd conclude the section here. Dd adds ॥६॥ द्वादश, Dc adds द्वादशे

रन्यतरत् ॥ २ ॥ धूम उदिते त्वेषस्ते धूम ऋण्वति [SV 1. 83] इति ॥ ३ ॥ प्रज्वलिते अदर्शि गातु [SV 1. 47, 2. 865] इति ॥ ४ ॥ निधीयमाने गवां व्रतं यत् अग्निमीडे [ĀrS 3. 4] इति ॥ ५ ॥

पञ्चस्वपि सूत्रेषु गायेदित्यनुषङ्ग इति । प्रज्वलित इति जननानन्तरमध्वर्युभिः प्रज्वलित इत्यर्थः ॥

तान्युद्गातृकर्मैके ॥ ६ ॥

तानि गानान्युद्गातुरेव कर्म न ब्रह्मण इत्येक इति ॥ कुत इत्यत[1] आह—

उद्गाता सामवेदेन [ŚB 11. 5. 8. 4] इति श्रुतेः ॥ ७ ॥

वेदशब्दो [illegible]वचनम्[2] । साममन्त्रैर्यत् कार्यं तत् कर्तृविशेषानादेशे[3] उद्गातैवेति वचनार्थः । तेनाग्न्याधेये[4] सामगानविधौ ब्रह्मणः प्रकृतत्वे ऽप्युद्गातुरेव गानमिति ॥ अत्र दृष्टान्तमाह—

यथा विहव्यसजनीयकयाशुभीयानि होतुः ॥ ८ ॥

यथा प्रकृते ऽप्यौद्गात्रे कर्मणि विहव्यं शस्यं सजनीयं शस्यमगस्त्यस्य कयाशुभीयं शस्यमिति । विहव्यादीनि सूक्तानि होतुरेव शस्यानि । ऋग्वेदे होतुः[5] [ŚB 11. 5. 8. 4] इति श्रुतेः । तद्वदत्रापीति ॥

प्रस्तोतुश्च वैराजशाक्वरप्रस्तावाः ॥ ९ ॥

चकारो यथेत्यनुकर्षणार्थः । वैराजे साम्नि ब्राह्मणं प्रस्तावं प्रस्तुत्य विष्टम्भान् विष्टभ्नोति [PB 12. 10. 7] इति । तथा महानाम्नीषु[6] क्षिप्रं प्रस्तुत्य क्षिप्रं गेयम् [PB 13. 4. 11] इति । उभयत्रापि प्रस्तुत्येत्युद्गात्रा समानकर्तृकश्रवणे[7] ऽपि तदनादृत्य प्रस्तोतुरेव प्रस्तावाः । सर्वत्र प्रस्तोता प्रस्तुयादिति सामान्यविधेरभङ्गार्थम् । तद्वदत्रापीति ॥

सर्वैश्चाविधानाद् ब्रह्मत्वकारिभिः ॥ १० ॥

न च ब्रह्मत्वविधायिभिः सूत्रकारैः सर्वैरपि ब्रह्मणो गानं विहितम् । किं तु कतिपयैरेव । तत्र ब्रह्मणो गानपक्षे सर्वैरपि वक्तव्यं स्यादिति ॥

1 Dd om. अतः
2 Df °वाचनं, Gb मंत्रवचनः
3 Dcde °विशेषादनादेशे
4 Gb तेन श्रुतिष्वग्न्या°
5 Gb ऋग्वेदन होता करोति
6 Dbce °री-(= Lāṭ.), Ddf °रे, Gb °रीः
7 Dcdf °कर्तृकत्वश्र°

कर्मयोग॥चो८॥ ।श्चत्वारो महर्त्विजः प्राश्नन्तीति[1] चातुष्प्राश्यप्राशनम्॥ ११ ॥

महर्त्विजः प्राश्नन्तीति वचनादुद्गातुरपि ब्रह्मौदनप्राशनम् । तेन तस्याधाने ऽप्यार्त्विज्येन योगो ऽस्ति न च गानं विना तस्यार्त्विज्यमस्तीति । तथा च जैमिनिरुद्गातुरेव गानमाहेति ॥ अथ स्वमतमाह—

अधिकारात् तु ब्रह्मणः ॥ १२ ॥

तुशब्दो मतान्तरनिवृत्त्यर्थः।[2]गानविधौ ब्रह्मणः प्रकृतत्वात् तस्यैव गानमिति[2]॥

औद्गात्रे चाविधानात् ॥ १३ ॥

यद्युद्गातुरेव गानं स्यात् तदानीमौद्गात्रप्रकरणे विधातव्यम् । न च तदस्तीति॥

दृष्टं चानेन सामगानं ब्रह्मा रथचक्रे ऽभिगायति [PB 18.7.12] इति ॥ १४ ॥

वाजपेये ब्रह्मणश्च[3] गानं दृष्टमिति । न ब्रह्मणो गानविरोध इति ॥

उद्गाता [sū. 7] इति यथाभूयसो[4]वादः ॥ १५ ॥

यः पुनः उद्गाता सामवेदेन [sū. 7] इति वादः स भूयस्त्वानुसारेण द्रष्टव्यः । तस्य गानभूयस्त्वात् । यथाभूयसमिति[5] भूयस्त्वानुसारेणेत्यर्थः ॥

हौत्रे विधेर्विहव्यादीनि ॥ १६ ॥

यत् पुनरुक्तं यथा विहव्यादीनि होतुः [sū. 8] इति तद्युक्तमेव । हौत्रमधिकृत्य बह्वृचब्राह्मणे तेषां विधानात् । सामवेदे ऽपि तद्विधेस्तेनैकवाक्यत्वादिति ॥

स्तोत्रवत् प्रस्तावाः विराट्सु स्तुवन्ति [PB 12. 10. 10] पुरीषेण स्तुवते [PB 13. 4. 12] इति च बहुश्रुतेः ॥ १७ ॥

अथ यदुक्तं यथा[6] च[7] प्रस्तोतुः प्रस्तावा[7] [sū. 9] इति तत्र ब्रूमः । न हि सामान्यविधेस्तत्र प्रस्तोतुरन्वयः । समानकर्तृकत्वा[8]विरोधादेवं । किं तु विराट्सु स्तुवन्ति ॥ पुरीषेण स्तुवते इति च बहुवचनात् प्रस्तोतुस्तत्रान्वयः । समानकर्तृकत्वं

1 Dbcd add ह (=Lāṭ.), Gb adds हि

2-2 Gb श्रुतौ ब्रह्मत्वं विधिं प्रकृत्य तन्मध्ये गानविधानात् ब्रह्मण एव गानश्रुतिश्च सूत्रकारेण इष्टेन

3 Dcde ब्रह्मणः साम-

4 Da °भूयसा, Gb °भूयः स

5 Dcdef यथाभूयमिति

6 Gb om.; Dcde तथा

7-7 Gb प्रस्तोतुश्च वैराजशक्करीः प्रस्तोता वा

8 Dde °कत्वाद् for °कत्व-

9 Df adds इति

विवादितम्[1] । स्तोत्रवदिति को ऽर्थः । यथा गौरीविते[2] षोडशिना स्तुवीत [PB 12. 13. 13] शाकलेन तुष्टुवानः [PB 13. 3. 10] मानवेन तुष्टुवानः [PB 13. 3. 15] इत्यादावेकवचनादुद्गातुरेव स्तोत्रे[3] प्राप्ते ऽपि हिरण्यं संप्रदायं षोडशिना स्तुवते[4] [PB 12. 13. 25] इत्यादि बहुवचनात् तत्र[5] प्रस्तोतुरन्वयः । तद्वदत्रापीति ॥

अविधानं विधेर्द्वैधात्[6] ॥ १८ ॥

यत् पुनरुक्तं सर्वैर्ब्रह्मणो गानं विहितं [com. on sū. 10] इति तद्युक्तम् । विधेर्द्वैविध्यात् विकल्पात् । कचिच्छाखायां ब्रह्मणो गानं विहितं कचिन्निषिद्धम् । तत्र निषेध[7]श्रुतिमाश्रित्य गानं न विहितमिति ॥

यावद्वचनं कर्मयोगः ॥ १९ ॥

यत एव न्यायतो ब्रह्मण एव गानं[8] तेन यावद्वचनं ब्रह्मौदनप्राशनमेवोद्गातुरार्त्विज्यं न गानमिति ॥

हुतायां पूर्णाहुतौ यथार्थं स्यात् ॥ २० ॥

गतमिति[9] ॥

अक्षांश्चेदभिजुहुयुस्तत्र[10] गत्वा तूष्णीमुपविशेत् ॥ २१ ॥

यद्यध्वर्यवो ऽक्षाभिहोमं कुर्युस्तदोपविशेदिति ॥

तैर्द्यूते यथार्थं स्यात् ॥ २२ ॥

अक्षद्यूते कृत इत्यर्थः ॥

इष्ट्यादिषु सर्वेषु यजुषोपविशेत् पूर्वो यजमानादाहवनीयं प्रति ॥ २३ ॥

अग्न्याधेयेष्टीनामादिष्वारम्भेषु सर्वेषु[11] यजमानस्य पुरस्तादाहवनीयाभिमुखो यजुषोपविशेत् । कः पुनरिष्टीनामारम्भः । यदीदमध्वर्योः कर्मणो वां देवेभ्यः शकेयम् [Āp. 1. 15. 4] इति हस्तप्रक्षालनं कुत एतत् । आपस्तम्बेन उदित

1 Dcde अपेक्षितं
2 Dcde °वितेन
3 Dce om.
4 Gb स्तुवीत
5 Dcd repeat तत्र
6 Daf °द्वैविध्यात्
7 Dce om. निषेध; Ddf निषिद्ध-
8 Dc adds विहितं
9 Gb om.
10 Gb °जुहुयात्तत्र
11 Gb सत्सु

आदित्ये पौर्णमास्यास्तन्त्रं प्रक्रमयति [1. 15. 1] इत्युक्तत्वादनन्तरं[1] प्रक्षालनविधानात् तथा[2] यजमानस्यापि तदानीमारम्भाभिधानात्[3]। तद्यथा इदं शकेयं यदिदं करोम्यात्मा[4] करोत्वात्मने[5] [Āp. 4. 4. 1] इति। तथा तदानीमेव [l.c. 2] ब्रह्मणो वरणं तदासन[6]-कल्पनं मन्त्रत उपवेशनं चापस्तम्बेन विहितमिति ॥

परिध्योर्वा संधिम् ॥ २४ ॥

प्रतीत्यनुवर्तते। दक्षिणपश्चिमयोः परिध्योर्वा संधिमभिमुखं[7] उपविशेदिति ॥

स्रुचां वाग्राणि ॥ २५ ॥ उत्करं वा ॥ २६ ॥

प्रतीत्यनुवर्तत[8] एव ॥

तमन्तरेणाहवनीयं च यजमानस्य संचरो नान्येषाम् ॥ २७ ॥

तं ब्रह्माणमिति ॥

तं यदाध्वर्युर्ब्रूयात् ब्रह्मन्निदं करिष्यामि इति सवितृप्रसूतोऽदः कुरु ॥

भूर्भुवः स्वर्बृहस्पतिर्ब्रह्माहं मानुष ओम् इत्येतेनानुमन्त्रयेत ॥ २८ ॥

ब्रह्मन्नपः प्रणेष्यामि इति ब्रह्मन् प्रोक्षिष्यामि इत्यादेरुपलक्षणं ब्रह्मन्निदं करिष्यामि इति। ओं[9] प्रणय ॥ प्रोक्ष[10] इत्यादेरुपलक्षणं अदः कुरु इति ॥

एतत् सर्वानुमन्त्रणम् ॥ २९ ॥

सर्वानुमन्त्रणमिति[11] संज्ञाकरणं व्यवहारार्थमिति[12] ॥

उच्चैः अदः कुर्वोम् इति ॥ ३० ॥

तस्मिन्ननु[illegible] अदः कुर्वोम् इत्यंशमुच्चैर्ब्रूयादितरमु[13]पांश्विति ॥

प्रणीतासु प्रणीयमानासु वाचं यच्छेदा तासां विमोचनात् ॥ ३१ ॥

स्पष्टमिति ॥ पक्षान्तरमाह—

तास्वेव प्रणीयमानास्वा हविष्कृतः स्तम्बयजुषश्चाध्या समिधः

1 Dcd इत्युक्तत्वात्तदनन्तरं, Gb इत्युक्त्वा तदनन्तरं
2 Dcde add हि
3 Dcde °रम्भावि°
4 Dd करोत्स्यात्मना
5 Thus Āp. and Dd; other mss. करो-म्या°
6 Reuter य°
7 Gb om. अभिमुखः
8 Dce चा°
9 Dd om. ओं
10 Dce ओं प्राक्ष
11 Gb om.
12 Dcdf omit इति; Df °रार्थे for °रार्थं
13 Gb °मु°

प्रस्थानीयाया इति वा[1] ॥ ३२ ॥

प्रणीताप्रणीयमानप्रभृति हविष्कृदेहि इति संप्रैषात् पूर्वं वाग्यमनः । तथा[2] स्तम्बयजुरारभ्य प्राक् समिदाधानात् । प्रस्थानमनुयाजप्रचारः । तदर्था समित् प्रस्थानीयेति ॥ पक्षान्तरमाह—

यत्र वाध्वर्युबह्वृचौ चेष्टेताम् ॥ ३३ ॥

अध्वर्युबह्वृचयोश्चेष्टायामवश्यं वाग्यमनमिति ॥ किमन्यत्र कामचारो नेत्याह—

यत्र वा न चेष्टेतां वाग्यतः प्रायस्त्वेव स्यात् ॥ ३४ ॥

तयोश्चेष्टाभावे ऽपि प्रायेण वाग्यत एव स्यादिति ॥

द्वितीयः खण्डः ॥२॥ ॥१०॥

---

प्रायश्चित्तं चेत् कर्तव्यं स्यात् भूः स्वाहा इति गार्हपत्ये जुहुयात् । भुवः स्वाहा इति दक्षिणाग्नौ । आग्नीध्रीये सुत्या चेत् । स्वः स्वाहा इत्याहवनीये । भूर्भुवः स्वः स्वाहा इति तत्रैव ॥ १ ॥

मन्त्रस्य कर्मणो वा भ्रेषे सति तत्समाधानं प्रायश्चित्तम् । तत्राविशेषेण[3] त्रिष्वग्निषु[4] होमः । सुत्या चेद्वर्तेत[5] आग्नीध्रीये भुवः स्वाहा इति होम इति ॥

हुत्वा ब्रूयात्—चेष्टताकार्ष्म प्रायश्चित्तम् इति ॥ २ ॥

चेष्टत प्रवर्तध्वं यूयम् अकार्ष्म वयं व्याहृतिहोमेन प्रायश्चित्तमित्यर्थः ॥

अवेलायां चेद्व्याहरेदयज्ञीयं वापद्येतैता एव व्याहृतीरन्वेक्षेत ॥३॥

अयज्ञीयं द्विविधं दैवकृतमात्मकृतं च[6] । विहारदेशे कृष्णशकुनिश्वापदादिसंचारो दैवम्[7] । अमेध्यदर्शनं[8] पतितादिसंभाषणादिकं[9] चात्मकृतम् । अन्वीक्षणं मनसानुद्रवणम् । तथैव षड्विंशश्रुतेरिति[10] [1.6.7] ॥

1 Dce च
2 Gb om.
3 Dce तत्र विशेषेण, Gb अत्राविशेषेण
4 Dcd त्रिष्वप्यग्निषु
5 Gb adds तदा
6 Dcde add इति
7 Gb दैवकृतं
8 Dce अमेध्यं
9 Gb पतितसं°
10 Gb °श्रुतिरिति

इदं विष्णुः [SV 1.22, 2.1019] इति वर्चम् ॥ ४ ॥

स्पष्टमिति ॥

अमावास्यायां दोहनपवित्रे मार्जयेरन्नापोहिष्ठीयाभिः[1] ॥ ५ ॥

अमावास्यायां दर्शयोगे ऽयज्ञीयोपनिपाते ऽभ्युच्चयविधिरयम् । दोहनपवित्रं दोहनार्थं शाखापवित्रम् । अकाले वाग्विसर्जने ऽयज्ञीयोपपत्तौ[2] च दोहनपवित्रं[3] हस्ते गृहीत्वापोहिष्ठीयाभिस्तसृभिर्मार्जनमधिकं[4] कुर्युरिति[5] ॥

बहुवचनात् सर्वे ऽपि कर्मान्विताः कुर्युः ॥ ६ ॥

एवमुत्तरत्रापि बहुवचनप्रयोगे[6] वेद्यमिति ॥

तद्भावे दार्भे ॥ ७ ॥

यदा शाखापवित्रं नास्त्यग्नौ प्रहरणात् तदानीं दर्भमयं पवित्रं कृत्वा तेनैव मार्जनं कार्यमिति ॥

सर्वेष्टिष्विति शाण्डिल्यायनः[7] ॥ ८ ॥

न केवलममावास्यायाम् । सर्वेष्टिष्वपि दर्भमये पवित्रे[8] मार्जनमधिकं[9] कार्यमिति । नन्वग्न्याधेयेष्टयः प्राकृताः[10] । कथममावास्यायामिष्ट्यन्तरेषु च[11] विशेषविधिरुच्यते । एतत् सर्वेष्टीनां ब्रह्मत्वम् [12.4.4] इत्यतिदेशं वक्ष्यति । तद्धृदि[12] कृत्वा विशेषविधिरिति[13] ॥

प्राशित्रमाह्रियमाणं प्रतिमन्त्रयेत—मित्रस्य त्वा चक्षुषा प्रतिपश्यामि इति ॥ ९ ॥

अध्वर्युणा प्राशित्रमाह्रियमाणमिति ॥

अप आचम्य देवस्य त्वा इति प्रतिगृह्णीयात् ॥ १० ॥

स्पष्टमिति ॥

व्यूह्य तृणानि पुरस्ताद्दण्डं सादयेत्—पृथिव्यास्त्वा नाभौ सादयामि

1 Da ॰हिष्ठीयादिभिः
2 Dcd ॰ज्ञि॰
Dce ॰त्रे
4 DdGb om. अधिकं
5 Gb कार्यमिति
6 Gb ॰योगेन
7 Gb शाण्डिल्यः
8 Dce add कृत्वा
9 Gb om. अधिकं
10 Dce प्रकृतायाः, Ddf प्रकृताः
11 Gb om.
12 Bb तं हृ॰
13 Gb विशेषकथनमिति

इति ॥ ११ ॥

अन्तर्वेदि दर्भतृणानि व्यूह्येत्यर्थः ॥

अङ्गुष्ठेनानामिकया चादाय[1] अग्नेष्ट्वास्येन प्राश्नामि इति प्राश्नीयात् ॥ १२ ॥

स्पष्टमिति ॥

असंखादं निगिरेत् ॥ १३ ॥

दन्तैः खादनमकुर्वन्नित्यर्थः ॥

अप आचम्योरसि पाणिं निदधीत—इन्द्रस्य त्वा जठरे सादयामि इति ॥ १४ ॥

स्पष्टमिति[2] ॥

प्रक्षाल्य प्राशित्रहरणं तत्र[3] निदध्यात् ॥ १५ ॥

तत्रेति पूर्वोक्तस्थान इति ॥

यथाहृतं वा प्रतिहारयेत् ॥ १६ ॥

स्पष्टमिति ॥

ब्रह्मभागमाहृतमग्रत उपनिदधीत[4] ॥ १७ ॥ तमिष्टौ संस्थितायां प्राश्नीयात् ॥ १८ ॥

स्पष्टे इति ॥

अन्वाहार्यमन्तरेण ब्रह्माणं यजमानं चाहरेत् ॥ १९ ॥

अन्वाहार्यमिष्टेर्दक्षिणा[5] । प्रभूतमोदनं[6] पक्त्वान्नं ब्रह्मयजमानावन्तरेणाध्वर्युर्हरेत्[5] ॥

स्वयं चेद् ब्रह्मा यजमानः स्यात् पूर्वेणैनम् ॥ २० ॥

हरेदित्यनुषङ्गः । यदि यजमानः स्वयमेवापत्कल्पेन ब्रह्मा स्यात् तदानीमेनं[7] पूर्वेणान्वाहार्यमाहरेदिति ॥

हृत्वा तमन्तर्वेदि सन्नं तूष्णीमालभेत ॥ २१ ॥

1 Dce वा°
2 Gb om.
3 Dbce तत्रैव
4-4 DcGb ब्रह्मभाग आहृतं तत्रोप°
5-5 Gb अध्वर्युरिति शेषः । अन्वाहार्यपचनमिष्टिं दक्षिणाहृतं
6 Dcde om. प्र
7 Gb adds यजमानं

तथा[1] हुत्वाध्वर्युणा वेद्यां सादितं ब्रह्मा स्पृशेदिति ॥

प्रजापतेर्भागो ऽसि इति[3] ॥ २२ ॥

एतावन्मन्त्र इति ॥

अथापरं प्रजापतेर्भागो ऽस्यूर्जस्वान् पयस्वान् ॥ अक्षितो ऽस्यक्षित्यै त्वा ॥ प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ[5] मे पाहि ॥ ऊर्गस्यूर्जं मयि धेहि इति ॥ २३ ॥

अथापरं मतम्—अनेन मन्त्रेणाभिमृशेदिति ॥

तत्रैव यजमानं वाचयेत्—प्रजापतिं त्वया समक्षमृध्यासम्[6] ॥ आ मा गम्याः ॥ अन्वाहार्यं ददामि[7] ॥ ब्रह्मन् ब्रह्मासि ॥ ब्रह्मणे त्वाहुतार्ध ॥ मा मा हिंसीः ॥ अहुतो मह्यं शिवो भव इति ॥ २४ ॥

तत्रैवान्वाहार्ये यजमानं मथित्वा वाचयेदिति ॥

तृतीयः खण्डः ॥ ३ ॥

---

समिधं प्रस्थानीयामनुमन्त्रयेत—देव सवितरेतत् ते यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे तेन यज्ञमव तेन यज्ञपतिं तेन मामव ॥ मनो ज्योतिर्जुषतामाज्यस्य[8] बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञं समिमं दधातु विश्वे देवास इह मादयन्ताम् इत्युपांशु प्रतिष्ठा इत्युच्चैः । भूर्भुवः स्वर्बृहस्पतिर्ब्रह्माहं मानुषः इत्युपांशु ओम् इत्युच्चैः ॥ १ ॥

प्रस्थानमनुयाजप्रचारः । तदर्था[9] समिधमनुमन्त्रयेत मानुष इत्यन्तेन मन्त्रेण । तत्र च ओम् इति च प्रतिष्ठा इति चोच्चैर्ब्रूयादितरदुपांश्विति ॥

सर्वानुमन्त्रणेन वा ॥ २ ॥

1 Gb यथा

2 Gb–भिमृ°

3 Dcde add वा

4 Dcde प्रजापतेर्भागोसीत्येता°

5 Dbcde °दानरूपे (=Lāṭ.)

6 Reuter समक्षमृद्धया सं सम्

7 Db ददाति, Dce ददति, Dd ददानि (=Lāṭ.)

8 DbceGa °ताज्य

9 Dce तदर्थं

सर्वानुमन्त्रणमन्त्रः पूर्वमुक्तः [12. 2. 28]। तेन वानुमन्त्रयेत[1] ॥

[illegible] प्रणीतासु समिध आदध्याद्यथावभृथादुदेत्य ॥ ३ ॥

प्रणीताविमोचने कृते ब्रह्मा समिध आदध्यात्। यथावभृथादुदेत्य एधो ऽस्येधिषीमहि [cp. 6. 4. 11] इत्यादिभिर्मन्त्रैः समिदाधानं तद्वदिति ॥

एतत् सर्वेष्टीनां ब्रह्मत्वम् ॥ ४ ॥

एतदुपवेशनप्रभृति स[illegible] न केवलमाधानेष्टीनां किं तु सर्वेष्टीनामित्यर्थः ॥

समानाहन्येकासने न पुनर्यजुषोपविशेदिति शाण्डिल्यः ॥ ५ ॥

संस्काराणामिष्टिसमाप्तावप्रवृत्तत्वादिष्टिभेदे पुनरपि यजुषोपवेशनमहरासनैक्ये[2] ऽपि कार्यमेवेति[3] स्वपक्षः। शाण्डिल्यस्य तन्नाभिमतमिति ॥

अग्न्याधेयेष्टिषु प्रथमायां यजुषोपविशेदुत्तमायां समिध आदध्यादिति गौतमः ॥ ६ ॥

इष्टिभेदे यद्यपि प्रयाजादिवत् पृथगुपवेशनं प्राप्तं तथाप्य[4]धानेष्टीनामग्न्यर्थत्वादेकेष्टितुल्यत्वात् सकृदेवादौ मन्त्रत उपवेशनमन्ते समिदाधानं चेति गौतम इति ॥

पृथगिष्टिष्विति धानंजय्यः ॥ ७ ॥

स्पष्टमिति ॥

चातुष्प्राश्यं च प्राश्नत्सु ॥ ८ ॥

चकारो धानंजय्यानुकर्षणार्थः। ऋत्विक्षु चातुष्प्राश्यं प्राश्नत्सु यजुषोपविशेद् ब्रह्मेति[5] ॥

[6]अग्न्याधेयस्य दक्षिणामाह—

धेनुं दद्याद् ब्रह्मणे ॥ ९ ॥

स्पष्टमिति ॥

अध्वर्यवे चाग्निपदम् ॥ १० ॥

अग्नेराहवनीयस्याधाने यद[illegible]मश्वादिपदं तदग्निपदम्[7]। तत्सिद्ध्यर्थो

1 Dcde °मंत्रयेताम्

2 Dcde °क्ये

3 Gb न्यायमेवेति

4 Dcde तथाप्रा°

5 Dcde om. ब्रह्मेति

6 Gb अथा°

7 Dcde om.

यो ऽश्वादिरानीयते स आग्निपदो ऽश्वादिरिति ॥

**धेनूर्होत्रे वत्सतरीर्ब्रह्मणे ऽनडुहो ऽध्वर्यवे सर्वे त्रिवर्गाः ॥ ११ ॥**

त्रिवर्गाः[1] त्रिगुणा इत्यर्थः। तिस्रो धेनूर्होत्रे तिस्रो वत्सतरीर्ब्रह्मणे त्रीन-नडुहो ऽध्वर्यव इत्युक्तं भवति ॥

**पष्ठौहीमाग्नीध्राय ॥ १२ ॥**

तदेवं द्वादश दक्षिणाः ॥ अथ सा[2]धारणमाह—

**सर्वेभ्यो ऽश्वरथं कुण्डले चेति ॥ १३ ॥**

एकाश्वरथः कुण्डलद्वयं च सर्वसाधारणमिति ॥

**एवमेव धेनुमा[3]ग्निपदं चेति शाण्डिल्यः ॥ १४ ॥**

पूर्वोक्तमा[4]ग्निपदं धेनुं[5] च[5] साधारणमाहेत्यर्थः[6] ॥ अथेष्टीनां[7] दक्षिणामाह—

**धेनुमनड्वाहं वत्सतरीं वत्सतरमजं पूर्णपात्रमिति तत् प्रथमाया-मिष्टौ दद्यात् ॥ १५ ॥**

तदिति[8] तद्धेन्वादिषट्कमित्यर्थः ॥

**तै[9]थोत्तरयोरन्यत्राजपूर्णपात्राभ्याम् ॥ १६ ॥**

उत्तरयोरिष्ट्योर्धेन्वादिचतुष्टयमिति ॥ पक्षान्तरमाह—

**वरः सप्तमो दक्षिणानां त्रयोदशो वा पञ्चविंशो वा—एतद्वा[10]ज-सनेयकम् ॥ १७ ॥**

अग्न्याधेयस्य सेष्टिकस्य षड् गावो दक्षिणाः। तासां सप्तमो वरः स्यात्। अथवा द्वादश गावः स्युः। त्रयोदशो वरः स्यात्। अथवा चतुर्विंशतिर्गावः। पञ्चविंशो वरः स्यात्। तदेतद्वाजसनेयकमतम् [cp. Kat. 4. 10. 12]। अत्रा-पस्तम्बः षड् देया द्वादश देयाश्चतुर्विंशतिर्देयाः [5. 20. 13] इति प्राह[11] विकल्पतं[12] इति ॥

1 Dcdef अ°
2 After सा one leaf is missing in Df. Sūtras 13–20 which are missing here are supplied by a supplementary leaf.
3 Dbce °म°
4 Dcde °म°
5 Dcde om.
6 Gb साधारणशब्दमित्यर्थः
7 Gb अथाग्न्याधेयेष्टीनां
8 Gb om.
9 Daf (supp. folio) अ°
10 Daf (supp. fol.)Ga इति for एतद्
11 Gb om.; Dcde ता
12 DcdGb °ल्पंत, De °ल्प्यंत

अग्न्याधेयान्तान् कुर्वते पूर्णाहुतिमन्त्राभिहोममिष्टीरिति ॥ १८ ॥

अग्न्याधेयस्य त्रीनन्तान[1]ध्वर्यवो विकल्पेन कुर्वते । तदानीमिष्ट्यभावे तद्दक्षिणालोप इति ॥

मिथुनौ दक्षिणान्वारम्भणीयायामिष्टौ ॥ १९ ॥

दर्शपूर्णमासयोरारम्भार्थेष्टिरन्वारम्भणीया । तस्यामन्वाहार्यस्थाने मिथुनौ गावौ दक्षिणा । तयोः प्रजापतेर्भागौ स्थः इत्यनुमन्त्रणमन्त्रेऽप्यूहः [cp. 12. 3. 22] कार्य इति ॥

वाजिनाश्विनघर्माणामृत्विक्षूपहवमिष्ट्वा प्राणभक्षं भक्षयेत् ॥ २० ॥

आश्विनो नाम सौत्रामण्यां कश्चिद् ग्रहः । चातुर्मास्येषु वाजिनं नाम हविः । घर्मः प्रवर्ग्यः । प्राणभक्षो ऽवघ्राणमिति[2] ॥

प्रत्यक्षभक्षं स्वे[3] यज्ञे ॥ २१ ॥

स्पष्टमिति ॥ वाजिनस्य भक्षणमन्त्रमाह—

यन्मे रेतः प्रसिच्यते यद्वा मे [4]अपिगच्छति यद्वा जायते पुनस्तेन मा शिवमाविश तेन मा वाजिनं कुरु तस्य ते[5] वाजिपीतस्योपहूत उपहूतस्य भक्षयामि इति वाजिनस्य[6] ॥ २२ ॥ ऋतूनां त्वा वाजिनां वाजिनं भक्षयामि इति वा ॥ २३ ॥ उभाभ्यां वोभाभ्यां वा ॥ २४ ॥

स्पष्टानीति[8] ॥ आश्विनघर्मयोस्[7] मन्त्रो वक्ष्यत [13.4.8, 14.3.7] इति ॥

चतुर्थः खण्डः ॥ ४ ॥ ॥ १२ ॥

---

## द्वादशः पटलः ॥ १२ ॥[9]

---

1 G त्रीनवसानान॰

2 Gb प्राण॰

3 DaGb स्व-

4 Dbcd om. अ (=Lāṭ.)

5 Dce add उ

6 DbG वाजि॰

7 Ddf om.

8 Gb स्पष्टमिति

9 Dcde add

द्राह्यायणकृते सूत्रे दीपे धन्विविनिर्मिते ।
द्वितीये दशके वृत्तो द्वितीयः पटलो ऽधुना ॥

ब्रह्मत्वमिदमाधाने सर्वेष्टिषु च दर्शितम् ।
द्वितीये पटले तच्च व्याख्यातं धन्विना स्फुटम् ॥

इति चतुर्थो ऽध्यायः ॥

---

1 Dcde प्रपाठकः (=Lāṭ.)

चातुर्मास्येषु वरुणप्रघासानां स्तम्बयजुर्हरिष्यन् यजुषोपविशेत् ॥ १ ॥

चातुर्मास्येष्वित्यधिकारः । चतुर्षुचतुर्षु मासेषु क्रियन्त इति चातुर्मास्यानि । वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाणि चत्वारि[1] पर्वाण्येकतन्त्राणि । आपो दारा इतिवद् वरुणप्रघासा इति नित्यं बहुवचनान्तम् । तेषां स्तम्बयजुर्हरणकाल ऐष्टिकात् प्रथमोपवेशनादधिकमेतदुपवेशनमपूर्वं कार्यम् । तथाध्वर्योर्हस्तप्रक्षालनकाले ऽप्यैष्टिकमुपवेशनं द्वितीयं कार्यमिति ॥

विलिखिते चात्वाले ऽध्वर्युणा सह प्रत्याव्रज्याहवनीयं[4] उपविशेत् ॥ २ ॥

उत्तरवेदिनिर्माणार्थं यस्मादवटान्मृदमाहरन्ति तच्चात्वालम् । तस्मान्मृदाहरणकाले ऽध्वर्युणा सह गत्वा चात्वाले ऽभ्रियां परिलिखिते सति[6] तेनैव सह प्रत्याव्रज्याहवनीयं प्रत्युपविशेत् । ननु । इदानीमाहवनीयो नास्ति उत्तरवेदिकरणोत्तरकालमध्वर्युभिः प्रणयनविधानात् । सत्यम् । अत्र पक्षद्वयमध्वर्युभिरुक्तम् । गार्हपत्यस्य पुरस्ताद् वेदिद्वयं कृत्वा गार्हपत्याद् द्वयोरग्न्योः प्रणयनमित्यापस्तम्बः [8. 5. 4, 22] । आहवनीयस्य पुरस्ताद् वेदिद्वयकरणं[7] ततश्च[8] प्रणयनमिति बोधायनकात्यायनौ [Kāt. 5. 3. 9] । तत्र द्वितीयपक्षाश्रयणे नेदं सूत्रम् । तदानीं पूर्वमेवाहवनीयस्य सद्भावादिति ॥

अग्नी प्रणीयमानौ यथैतमनुगच्छेत् ॥ ३ ॥

1 Dcde चत्वार्येव
2 Gb पर्वाण्यैष्टिक°
3 Gb om. प्रथम
4 DbcdeG °नीयम्
5 Dcde °णा
6 Gb om.
7 Dce वेदिकद्वयकरणे
8 Dcde om.

आहवनीयस्य पुरस्ताद् वेदिद्वयं कृत्वा तत एवाहवनीयाद् द्वावग्नी प्रणेयाविति[1] बोधायनकात्यायनौ। तावग्नी यथैतमनुगच्छेत्। येन पथाध्वर्युः प्रणयति तेन तमनुगच्छेत्। येन प्रतिप्रस्थाता तेन तमनुगच्छेदित्यर्थः॥

**अध्वर्युश्चेद् ब्रूयात् ब्रह्मन्नेकस्फ्ययोपसंभिन्द्धि इति स्फ्येनाहवनीयात् पांसूनुपहत्योत्तरस्या वेदेर्दक्षिणादन्तात् कर्षन्नियात्॥ ४॥**

एकयत्नेन [illegible] कर्षणक्रिया एकस्फ्या। तया संभेदनमेकीकरणं सकृदेव पांसूनाहवनीयान्तात् संततमाकृष्य तस्याहवनीयस्य पूर्ववेदिद्वयेन मेलनं कुर्विति प्रैषार्थः। उत्तरस्या वेदेर्दक्षिणमन्तं यावत् पांसून् कर्षन् गच्छेदित्यर्थः। एवं मेलने कृते ऽग्निद्वयमप्येकायतनस्थं कृतं भवेदिति भावः॥

**आ वेदिमध्यादेका चेत्॥ ५॥**

यत्र साकमेधपशुबन्धादिषु पूर्वा वेदिरेकैव भवति तदा तन्मध्यं यावत् पांसूनाकर्षन् गच्छेदिति॥

**प्रोह्य स्फ्यं पश्चिमेन वेदी[2] गत्वा निधीयमानयोरग्न्योस्तूष्णीमुपविशेत्॥ ६॥**

प्रोहणमुदसनम्। तत् कृत्वा तयोरग्न्योर्दक्षिणत उपविशेदिति॥

**एतत् कर्माग्निप्रणयनेषु सर्वेषु॥ ७॥**

अग्नी प्रणीयमानौ यथैतमनुगच्छेत् [sū. 3] इत्यारभ्य यदुक्तं तत् सर्वेष्वग्निप्रणयनेषु स्यादिति॥

**अवभृथन्यङ्गं गच्छत्सु पूर्वेणाग्नी[3] चात्वालं च गच्छेत्॥ ८॥**

मुख्यावभृथः सौमिकः। तस्य क्रियास्पर्शो न्यङ्गः। स यत्रास्ति तदवभृथन्यङ्गं तुषनिष्काषप्रतिपादनम्। तत् कर्तुमध्वर्युषु गच्छत्सु पूर्वेण गच्छेदिति॥

**पश्चिमेन वेदी चात्वालं च स्वे यज्ञे॥ ९॥**

स्वे यज्ञे सत्त्रे कुण्डपायिनामयनगतेषु चातुर्मास्येष्टिष्वित्यर्थः॥

**हविर्यज्ञेषु[4] संचर उत्तरेण विहारं कर्मभ्यः॥ १०॥**

उत्तरेण विहारं यानि कर्माणि क्रियन्ते तदर्थमेष एव संचरः। न तु अपरेणाहवनीयं दक्षिणातिक्रम्य [6.5.3] इत्यापस्तम्बोक्तः संचरो ऽभिप्रेत इति॥

1 Dcdef प्रणेष्यामिति
2 Dabdf वेदिं
3 DfGa °ग्निं
4 Dcde कौंड°

यथा चात्वाले तथा यूपे शामित्रे च पशौ ॥ ११ ॥

निरूढपशौ[1] यूपशामित्रयोः पुरस्तादेष संचरश्चात्वालवदिति ॥

अवभृथन्यङ्गं प्राप्याभ्युक्षणप्रभृति सौत्यं कर्म समापयेयुः ॥१२॥

अवभृथदेशं गत्वाभ्युक्षणप्रभृति [6. 4. 8] समिदाधानान्तं [6. 4. 11] सुत्यायां यदुक्तं तत्[2] सर्वं कुर्युः । एतदन्तं वरुणप्रघासेषु ब्रह्मत्वम् । बहुवचनं सर्वार्थमिति ॥

साकमेधेषु क्षीरोदनस्य यथार्थं प्राश्नीयात् ॥ १३ ॥

द्व्यहेन साकमेधानुष्ठानम् । पूर्वस्मिन् दिवसे रात्रौ क्षीरोदनो गृहमेधीयः । साकमेधे गृहमेधीयस्य शेषं यथेच्छं प्राश्नीयाद् वा न वेति ॥

यजमानं ब्रूयात्—प्रभूतमन्नं कारय ॥ सुहिता अलंकृता भवतेत्यमात्यान् ब्रूहि ॥ वत्सांश्च मातृभिः सह वासय[3] ॥ १४ ॥

कारय ॥ ब्रूहि ॥ वासय इति त्रयः प्रैषा इति ॥

पूर्वाह्णे ऽध्वर्युः क्षीरोदनमृषभस्य रवथे जुहोति ब्रह्माणमुपवेश्य ॥ १५ ॥

उत्तरेद्युः पूर्वाह्ण ऋषभमानीय तस्य रवथे शब्दे सत्यध्वर्युर्जुहोतीत्यनुवादो ऽयमुत्तरार्थम्[4] ॥

ऋषभे ऽरुवति ब्रह्मैव ब्रूयात्—जुहुधि इति ॥ १६ ॥

यद्यृषभो न शब्दं कुर्यात् तदा ब्रह्मैव जुहुधि इति ब्रूयात् । अरुवतीति नञ्समासात् सप्तमीति ॥

तूष्णीं[5] पैतृयज्ञिकायां[6] सर्वं कुर्यात् ॥ १७ ॥

अथ पितृयज्ञिकायामिष्टौ[7] सर्वमुपवेशनादिकं तूष्णीमेव कुर्यादिति ॥

ओम् इत्येवानुमन्त्रयेत ॥ १८ ॥

सर्वानुमन्त्रणमन्त्रे ओम् इत्येतावन्मात्रं ब्रूयादिति ॥

यज्ञोपवीतप्राचीनावीतयोरध्वर्युमनु विदधीत ॥ १९ ॥

1 DfGb निरूढे
2-2 Dcde om.
3 Dcde वासयेत (= Lāṭ.), Ga संवासयेत्, Gb वासयेत्
4 DcGb °र्थः
5 Daf add वै
6 G पैतृक°
7 Gb पित्र्यायामिष्टौ

यदाध्वर्युर्यज्ञोपवीती प्राचीनावीती वा स्यात् तदानीं तद्वदेव ब्रह्मापि स्यादिति ॥

तस्या हवींषि निर्वप्स्यन् दक्षिणया द्वारा प्रपद्य पश्चात् प्राङ्मुख उपविशेत् ॥ २० ॥

निर्वापदेशस्य पश्चादिति ॥

एवमेव वेदिं गत्वा स्तम्बयजुर्हरिष्यन् ॥ २१ ॥

स्तम्बयजुर्हरणदेशस्य पश्चात् प्राङ्मुख इति ॥

आज्यभागयोर्हुतयोर्दक्षिणेनाग्निं परिक्रम्य पुरस्तात् प्रत्यङ्मुख उपविशेद् यजमानश्च ॥ २२ ॥

स्पष्टमिति ॥

प्रथमः खण्डः ॥ १ ॥ ॥१॥

---

हुते स्विष्टकृति यथेतं[2] प्रत्याव्रज्योपविशेताम्[1] ॥ १ ॥

स्पष्टमिति[3] ॥

प्राशित्रमाहृतमुपघ्रायापविध्येत् ॥ २ ॥

आघ्रायोदस्येदिति ॥

आज्यं चेत् प्राशित्रभागादवद्येयुस्तदुपघ्रायाप[4] उपस्पृशेत् ॥ ३ ॥

स्पष्टमिति ॥

इडां च प्रतिगृह्य प्रतिप्रयच्छेत् ॥ ४ ॥

इडाप्रतिग्रहः प्रकृतौ नास्ति । तस्यापूर्वस्य विधिः सर्वो[5] दृष्टार्थे भक्षणाभावादिति ॥

अध्वर्युणा परिषिच्यमाने व्युत्क्रम्य परिषिक्त आहवनीयमुपतिष्ठेरन् ॥ ५ ॥

अध्वर्युणा वेदिपरिषेचने प्रक्रान्ते परिश्रिताया वेदेर्निष्क्रम्य परिषिक्त उपस्थानमिति ॥

1 Ddef om.

2 DbceG यथैतं

3 Dcdef om.

4 Daf °दव° for °दुप°

5 Dce सर्वाः सर्वा

**दक्षिणेन दक्षिणाग्निमुत्तरेण दक्षिणाग्निं स्वे[1] यज्ञे ॥ ६ ॥**

दक्षिणेन दक्षिणाग्निं स्थित्वाहवनीयमुपतिष्ठेरन् सत्रेषूत्तरेण स्थित्वेति ॥

**अक्षन्नमीमदन्त हि [SV 1. 415] इति प्रथमा ।**

सुसंदृशं त्वा वयं मघवन् मन्दिषीमहि ।

प्र नूनं पूर्णवन्धुरः स्तुतो यासि वशां अनु योजा न्विन्द्र ते हरी ॥

**इति द्वितीया । उपो षु शृणुही[2] गिरः [SV 1. 416] इति तृतीया ॥ ७ ॥**

एताभिस्तिसृभिरुपस्थानमिति ॥

**तत ऽवेक्षमाणा गार्हपत्यं**

मनो न्वा हुवामहे नाराशंसेन स्तोमेन[3] ।

पितॄणां च मन्मभिः ॥

पुनर्नः पितरो मनो ददातु दैव्यो जनः ।

जीवं व्रातं सचेमहि ॥

आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे ।

ज्योक् च सूर्यं दृशेयम् ॥

**इति ॥ ८ ॥**

तस्मिन्नेव स्थाने स्थित्वा[4] मनो न्वा हुवामहे इति तिसृभिर्गार्हपत्यमुपतिष्ठेरन्निति ॥

**कया नश्चित्र आ भुवत् [SV 1. 169] इत्येकया[5] दक्षिणाग्निम् ॥ ९ ॥**

स्पष्टमिति[6] ॥ पित्र्या समाप्ता[7] ॥

**त्रैयम्बका नामापूपा भवन्त्येककपालाः । तेषां यमध्वर्युरास्वूत्कर उपवपेत् तस्मिन्नप उपस्पृशेयुः—**

1 Daf स्व-

2 DfG °हि

3 Dbcde सोमेन (=Lāṭ.)

4 Dcde om.

5 Daf °त°

6 Gb om.

7 Dcdef have here the figure ॥२॥ denoting thereby the conclusion of this khaṇḍa.

शिवा नः शंतमा भव सुमृडीका सरस्वति ।

मा ते व्योम संदृशि[1] ॥

इति ॥ १० ॥

त्र्यम्बकदेवत्यत्वात् त्रैयम्बका नाम केचनापूपाः पुरोडाशाः । तेषामेकमध्वर्युराखूत्करे निवपति । तस्योपरिष्टादप उपस्पृशेयुरिति[2] ॥

आसीतेतरेषां हूयमान इति धानंजय्यः ॥ ११ ॥

इतरेषां पुरोडाशानां होमे क्रियमाणे आसीतेत्येकमतमिति ॥

तिष्ठेदिति शाण्डिल्यः ॥ १२ ॥

गतमिति[3] ॥

हुते तिष्ठन्तो जपेयुः—अवाम्ब रुद्रमयक्ष्महीव देवं त्र्यम्बकम् । यथा नः श्रेयसः करद् यथा नो वस्यसः[4] करद् यथा नः पशुमतः करद् यथा नो व्यवसाययात् । भेषजमसि भेषजं गवे ऽश्वाय पुरुषाय भेषजं सुगं मेषाय मेष्यै सुभेषजं यथासन् इति ॥ १३ ॥

सर्वेषु हुतेषु तिष्ठन्तो जपेयुरिति ॥

द्वितीयः खण्डः ॥ २ ॥ ॥२॥

---

यजमानस्यामात्या एकैकमपूपमादाय[5] प्रदक्षिणमग्निं परीयुः[6] । तत्र ब्रह्मा परियञ्जपेदिति धानंजय्यः ॥ १ ॥

अमात्याश्चतुष्पथ्यमग्निं परियन्ति । तदानीं ब्रह्मापि तमग्निं परिगच्छञ्जपेद् वक्ष्यमाणं मन्त्रमिति ॥

तिष्ठन्निति शाण्डिल्यः ॥ २ ॥

1 Dbd °श (=Lāṭ.)

2 Gb om. इति; Dce read °शेयुरिवा न इति मंत्रेणेति

3 Gb om.

4 Dbcde वसीयसः (=Lāṭ.)

5 Dbcde (and Lāṭ.) add त्रिः

6 Dcde add इति

7 Dcde उपग°

मन्त्रमाह[1]—

त्र्यम्बकं यजामहे सुगन्धिं[2] पुष्टिवर्धनम् ।

उर्वारुकमिव[3] बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥

इति । जामी कुमारी वा या स्यात् पतिकामा सा[4] विपरीयात्—

त्र्यम्बकं यजामहे सुगन्धिं[5] पतिवेदनम् ।

उर्वारुकमिव बन्धनादितो मुक्षीय ॥

इति ज्ञातीनभिकल्पयेत ॥ ३ ॥

सा कुमारी त्र्यम्बकम् इति मन्त्रं ब्रुवाणा मृत्योर्मुक्षीय इत्यस्य स्थाने इतो मुक्षीय इत्युक्त्वा इतः इत्यनेन पादेन[6] ज्ञातीनभिसंदध्यात् । इतः पितृकुलादित्यर्थः ॥

मामुतः इतीष्टमभिनिर्दिशेदमुष्य गृहादिति ॥ ४ ॥

मामृतात् इत्यस्य स्थाने मामुतः इतीष्टं परिग्रहं निर्दिशेत् । तद्यथा—इतो मुक्षीय मां[7] पत्युर्महादेवस्य गृहात्[7] इति ॥

एवं त्रिः परीत्योदस्येयुः ॥ ५ ॥

एवमग्निं त्रिः परीत्य पुरोडाशानाकाशे हस्ताभ्यामुदस्येयुरमात्या इति ॥

तेषां ब्रह्मैकं लिप्सित्वा यस्य स स्यात् तस्मै प्रयच्छेत् ॥ ६ ॥

तेषामुत्क्षिप्तानां[8] पुरोडाशानामेकमाकाश एव ब्रह्मा स्वहस्तेन प्रतिलभ्य तस्मा एव च पुनः प्रयच्छेद् येनोत्क्षिप्त इति ॥

तस्य वैव सन्तं पाणावालभेत ॥ ७ ॥

अथवा तस्यैव पाणौ सन्तं ब्रह्मा स्पृशेत् । न स्वयमाकाशे गृह्णीयादिति ॥

तथैव त्रिः प्रतिपरीयुः ॥ ८ ॥

[9]तथैव त्रिः प्रसव्यं परीयुरिति[9] ॥

यत्रैनानध्वर्युरासजेत् तत्रोपतिष्ठेरन्—एष ते रुद्र भागस्तेनावसेन

1 Gb om.

2 Gb °न्धं

3 Gb पुरुवारु°

4 Dbce परीयात्, Gb विपर्य्यादिति

5 Df °न्धं

6 Dcf पदेन

7-7 Dce नय मा पुनरिष्टग्रहान्, Ddf मा पत्युर्नारायणस्य गृहं (Dd ग्रहा)

8 Dcdef °मुद्दिष्टानां

9-9 Gb om.

परो मूजवतो ऽतीहि कृत्तिवासाः पिनाकहस्तो ऽवततधन्वोम् इति ॥ ९ ॥

यत्र वृक्षेषु तानध्वर्युरपूपानासजेत् तत्र देवं[1] पतिष्ठेरन्निति ॥

आ तमितोरुपेयुः ॥ १० ॥

यावत् प्राणस्य समस्तावदनुच्छ्वसन्तः एष ते रुद्र भागः इति मन्त्रं पुनः पुनरावर्तयन्तो जपेयुरिति ॥

शं नो देवीः [SV 1.33] इत्यप उपस्पृश्यानवेक्षं प्रत्याव्रजेयुः ॥ ११ ॥

स्पष्टमिति ॥

एवं चातुर्मास्येषु ब्रह्मत्वमुक्तम् । शुनासीरीये पर्वणि[2] वैशेषिकाभावान्न[3] किंचिदुक्तम्[3] । अथ यदुक्तं वरुणप्रघासिकं ब्रह्मत्वं तच्चात्वालादिकमत्सु हविर्यज्ञेष्वतिदिश्यत इति ॥

वरुणप्रघासैर्व्याख्यातं ब्रह्मत्वं हविर्यज्ञेषु ॥ १२ ॥

सप्त हविर्यज्ञान् वक्ष्यति । तेषामादित्यश्चतुष्टये तावच्चात्वालाग्निप्रणयनावभृथानामभावाद् ब्रह्मत्वं नातिदेष्टव्यम् । पारिशेष्याच्चात्वालादिमत्सु हविर्यज्ञेष्वतिदिश्यत इति ॥ अथ पशुबन्धेषु वैशेषिकमाह—

पशूनां यूपाहुतिं होष्यत्सु तूष्णीमुपविशेत् ॥ १३ ॥ हुतायां यथार्थं स्यात् ॥ १४ ॥

स्पष्टे इति ॥

वपायां हुतायां इदमापः इति चात्वाले मार्जयित्वा सर्वपशूनां यथार्थं स्यात् ॥ १५ ॥

सर्वेषु पशुषु यागेषु इदमापः इति तृचेन मार्जनं कार्यम् । सर्वपशुग्रहणं पशुविशेषं[4] प्रत्याचार्याणां मार्जने विप्रतिपत्तिर्नास्तीति दर्शयितुमिति ॥

पुरोडाशेन[5] चरिष्यत्सु[5] तूष्णीमुपविशेत् ॥ १६ ॥

स्पष्टमिति[6] ॥

1 Gb तेन for देवं

2 Gb om.

3–3 Gb °भावात्तथोक्तं

4 Gb विशेषप्र°

5–5 Ga पुरोडाशे चरित्वा सु

6 DdfGb om.

आहृतं पुरोडाशमालभ्य ब्रूयात्—प्राश्नन्तु ये प्राशिष्यन्त इति ॥ १७ ॥

पुरोडाशमिडामाहृतामालभ्य ब्रूयात्—ये मद्व्यतिरिक्ताः प्राशिष्यन्ते त एव प्राश्नन्तु नाहमिति । [1]प्रकृतौ ब्रह्मण इडाप्राशनाभावादिति[1] ॥

अनुव्रजे, सर्वपशूनां पत्नीसंयाजानिति गौतमः ॥ १८ ॥

सर्वेष्वपि पशुयाजेषु[2] पत्नीसंयाजान् क्रियमाणाननुव्रजेद् ब्रह्मेति गौतम इति ॥

सवनीयस्यैवेति[3] धानंजय्यः ॥ १९ ॥

गतमिति[4] ॥

न[5] सवनीयस्य चनेति[6] शाण्डिल्यः ॥ २० ॥

चनेति निपाते व्यर्थे सवनीयस्यापि पत्नीसंयाजान्[7] नानुव्रजेदित्यर्थः ॥

हृदयशूलो ऽत्रावभृथन्यङ्गस्थाने भवति ॥ २१ ॥

वरुणप्रघासेषु यदवभृथन्यङ्गमुक्तं तत्स्थाने हृदयशूलोद्वासनमत्र भवतीति ॥

तस्मिन्नप उपस्पृशेयुः—धाम्नोधाम्नो राजंस्ततो वरुण नो मुञ्च । यदापो अघ्न्या वरुणेति शपामहे ततो वरुण नो मुञ्च ॥ सुमित्र्या[8] न आप ओषधयः सन्तु दुर्मित्र्यास्[9]तस्मै सन्तु यो ऽस्मान् द्वेष्टि यं च वयं द्विष्मः इति ॥ २२ ॥

हृदयशूलस्योपरिष्टादुपस्पर्शनमिति ॥

तृतीयः खण्डः ॥ ३ ॥ ॥ ३ ॥

---

अभ्युत्तणप्रभृत्यत ऊर्ध्वम् ॥ १ ॥

1–1 Dcdef om.

2 Dcd °यागेषु

3 Da सवनीयानामेवेति

4 Gb om.

5 Ga om.

6 Gb चैवेति

7 Gb adds क्रियमाणान्

8 Dbcde सुमित्रिया (=Lāṭ.)

9 Dbcde दुर्मित्रिया° (=Lāṭ.)

अभ्युत्तणादुपस्पर्शनादूर्ध्वमभ्युत्तणप्रभृति सर्वं सौत्यकर्म कुर्युरिति। तत्रादित्योपस्थानमप्युक्तम् [6. 4. 9]। तदिह न कार्यमित्याह—

आदित्यं नोपतिष्ठेरन् ॥ २ ॥

गतमिति ॥

पूर्णाहुतौ हूयमानायामासित्वा हुतायां यथार्थं स्यात् ॥ ३ ॥

बोधायनमते पूर्णाहुत्यन्तः पशुरिति ॥

सक्तुहोमांश्चेज्जुहुयुरासीता तेषां होमात् ॥ ४ ॥

सक्तुहोमाश्च पशौ बोधायनेनोक्ताः। तेषामा होमादासित्वा पश्चाद् गमनमिति ॥

सौत्रामण्यां सुराकर्मस्वाव्राजमासीत ॥ ५ ॥

आव्राजमिति णमुल्प्रत्ययान्तः। अध्वर्युणा सुरासंधानादिषु क्रियमाणेष्वाव्रज्याव्रज्येत्यर्थः ॥

तत्र द्वावग्नी अतिप्रणयन्ति। तयोर्दक्षिणत आसीत ॥ ६ ॥

ननु च वरुणप्रघासधर्मातिदेशात् सिद्धमेव द्वयोर्दक्षिणत आसनम्। सत्यम्। पशुबन्धेषु चात्वाले मार्जनानन्तरं यथार्थं स्यात् [13. 3. 15] इत्युक्तम्। तन्मा भूदित्येवमर्थं सूत्रम्। मार्जनानन्तरं कुम्भ्यामासक्तायां पुनरप्यासीत न पुनर्यथार्थं गच्छेदिति ॥

दक्षिणमभ्यधि कुम्भ्यामासक्तायां सुराशेषेष्वासिच्यमानेषूपतिष्ठेरन्—

यत् ते पवित्रमर्चिष्यग्ने विततमन्तरा।

ब्रह्म तेन पुनीहि मा ॥

इति ॥ ७ ॥

दक्षिणमग्निं मथितस्योपरिष्टाच्छतच्छिद्रायां कुम्भ्यां सुराशेषेष्वासिच्यमानेष्वग्नेरुपस्थानं कार्यम्। बहुवचनमध्वर्य्वादेरप्यावश्यकमुपस्थानमिति ॥

अग्निहोत्रहविर्भक्षयेत्—

1 Thus emended. Dcde अभ्युतउप°, Df अभ्यु उप°, Gb अभ्युत्त उप°

2 Thus Dbcde (and Lāṭ.); other mss. °रासित्वा

3 Dce °देशेन for °देशात्

4 Dbc add शतातृणायां

5 Dbdef °न्तरं (=Lāṭ.)

6 Dcde °छिद्रणा, DfGb °छिद्रया

यमश्विना नमुचेरासुरादधि सरस्वत्यसुनोदिन्द्रियेण ।

इमं तं शुक्रं मधुमन्तमिन्दुं सोमं राजानमिह भक्षयामि ॥

इति[1] ॥ ८ ॥

स्पष्टमिति ॥

यजमानं चेद् वसातिशेषेणाभिषिञ्चेयुरुपोत्थायान्तरेणाग्नी[2] गत्वाध्वर्युणोक्तः संशानानि गायेत् ॥ ९ ॥

यदि पशुरसेन यजमानमभिषिञ्चेयुस्तदा संशानसाम्नां गानमध्वर्युणोक्त इति वचनात् प्रैषाभावे न गायेदिति ॥

पदायपदाय स्तोभेत् ॥ १० ॥

परिसामत्वात् स्वाध्यायवद् गाने प्राप्त इदं वचनमिति ॥

निधनान्युपयन्तो यजमानस्य मूर्धानमालभेरन् ॥ ११ ॥

बहुवचनं सर्वेषामृत्विजां ग्रहणार्थमिति ॥ के पुनः स्तोभाः कानि वा[3] निधनानीत्यत आह—

सं त्वा हिन्वन्ति इत्येतेषां पूर्वःपूर्वः [4]स्तोभ उत्तरं[4] निधनम् ॥ १२ ॥

बृहदिन्द्राय गायत [SV 1. 258] इत्यस्या ऋचः पुरस्तात् सं त्वा हिन्वन्ति धीतिभिः[5] ॥ सं त्वा रिणन्ति धीतिभिः[5] ॥ सं त्वा ततक्षुर्धीतिभिः ॥ सं त्वा शिशन्ति धीतिभिः[5] इति चत्वारि वाक्यानि गीतानि[6] । चतुर्थं वाक्यमुपरिष्टादपि गीतम् । तदितरेषामपि प्रदर्शनार्थम् । तेन तस्यैव गीतिप्रकारेणेतराण्यपि पुरस्तादुपरिष्टाच्च विभज्य गेयानि[7] । [8]ततः औहो[8] वा इत्युपायात् पूर्वःपूर्वो ऽंशः[9] स्तोभ उत्तरमुत्तरं संश्रवसे इत्यादि निधनम् । स्तोभनिधनभेदात् सामभेदः । एकरूपमेवार्चिकं गानमिति ॥

[10]श्रवसे इति स्थाने[10] जित्यै इति क्षत्रियस्य पुष्ट्यै इति वैश्यस्येत्येके[11] ॥ १३ ॥

1 Dbcde add भक्षयेत् (=Lāṭ.)

2 DfG °ग्निं

3 Dcd om.

4-4 Ga स्तोभमुत्तरं ; Gb repeats उत्तरं

5 Dcdef om.

6 Gb अधी °for गी°

7 Dcdef add इति

8-8 Dcd तत्रौहो

9 Dcd पूर्वांश for पूर्वो ऽंशः

10-10 Dbcde श्रवस स्थाने (=Lāṭ.)

11 Dbd वैश्यस्यैके, Gb वैश्यस्य कुर्यादित्येके

संश्रवसे ॥ विश्रवसे ॥ सत्यश्रवसे ॥ श्रवसे इति चत्वारि निधनानि[1]। तत्र [2]श्रवसे इति स्थाने[2] जित्यै इति क्षत्रियस्य यजमानस्य कुर्यात्। पुष्ट्यै इति वैश्यस्य कुर्यात्। तद्यथा—संजित्यै विजित्यै[3] सत्यजित्यै जित्यै इति। [4]संपुष्ट्यै विपुष्ट्यै सत्यपुष्ट्यै पुष्ट्यै इति[4] ॥

**द्वे सौत्रामण्यौ कौकिली चरकसौत्रामणी च ॥ १४ ॥**

गतमिति[3] ॥

**कौकिल्यां सामगानं नेतरस्याम्। संशानानि गायेदिति ह स्माह कौत्सः ॥ १५ ॥**

कौकिल्यामेव सामगानं नेतरस्यामिति कौत्सो मन्यते[5] इति ॥ अथ [6]केषु पुनर्हविर्यज्ञेषु[6] ब्रह्मत्वमुक्तं तानाह ॥

**सप्त हविर्यज्ञसंस्थाः—अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणी च[7] ॥ १६ ॥**

स्पष्टमिति ॥

अग्निहोत्रे ऽपि ब्रह्मा भवतीति[8] सूत्रकारस्य पक्ष इति ॥ इदानीं सुत्यायां[3] ब्रह्मत्वं विधास्यंस्तस्याः [9]संस्थाया भेदाद् ब्रह्मत्वविषयानाह[9] ॥

**सप्त सोमसंस्थाः—अग्निष्टोमो ऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयो ऽतिरात्रो ऽप्तोर्याम इत्यप्तोर्याम इति ॥ १७ ॥**

ब्राह्मणेष्वग्निष्टोमादयः शब्दाः संस्थाविशेषवाचिनो न पुनर्विश्वजिदादिशब्दवदेकाहविशेषवाचिन इत्यर्थः। तेन[3] वाजपेयादिसंशब्देनैनं[10] ब्रह्मत्वं विधीयमानं तत्संस्थाप्रयुक्तं [11]न पुनः क्रतुविशेषप्रयुक्तमिति[11] दर्शितं भवति। केचित् तु संस्थानुक्रमणं तासां नित्यताप्रतिपादनार्थमित्याहुः। तदयुक्तम्। न ह्यनुक्रमणमात्रान्नित्यतासिद्धिरिति ॥

चतुर्थः खण्डः ॥ ४ ॥ ॥ ४ ॥

---

1 Dcd स्थानानि

2–2 Dcde श्रवस स्थाने

3 Gb om.

4–4 Gb om.; Dcf om. only सत्यपुष्ट्यै

5 Dcde भिमन्यत

6–6 Gb के पुनर्हविर्यज्ञा येषु

7 Dbcde add इति; Ga inserts इति before

8 Gb भवेदिति

9–9 Ddf संस्थाभेदमाह

10 DcdeGb °संशब्देन

11–11 Gb om.

## त्रयोदशः पटलः ॥ १३ ॥

---

इति छन्दोगसूत्रस्य दीपे धन्विविनिर्मिते ।
तृतीयः पटलो वृत्तो हविर्यज्ञा निरूपिताः ॥

अथ सोमयागेषु ब्रह्मत्वं विधातुमारभते—

सुत्यायां ब्रह्मणः प्राक् सुब्रह्मण्याया औद्गात्रेण समानं कर्म ॥ १ ॥

सुत्यायामित्यधिकारः। क्रीते राजनि [cp.1.2.23] सुब्रह्मण्याप्रवृत्तेर्यत् पूर्वमुद्गातुः कर्म तद् ब्रह्मणो[1] ऽपि समानम्। किं पुनस्तत्। महन्मे ऽवोचः इति प्रतिमन्त्रणं[2] [1.1.10] सोमप्रवाकस्य परिवेषणमिति [1.1.12] ॥

ईक्षणाक्रमणे वेदेः ॥ २ ॥

समानमित्यनुवर्तते। पूर्वमुद्गातुः उत्तरं[3] वेद्यन्तमाक्रम्य दक्षिणामीक्षमाणः पितरो भूः इति [1.1.25] तदपि ब्रह्मणः समानमित्यर्थः। सुब्रह्मण्याप्रवृत्तेरुद्गातुर्वेदेराक्रमणमिति सूत्रारम्भः। देवो देवमेतु इति मन्त्रेण गमनम् [1.1.23] अप्याक्रमणाङ्गत्वाद् ब्रह्मणः समानमेवेति ॥

संचरधिष्ण्योपस्थानदक्षिणाप्रतिग्रहभक्षाः ॥ ३ ॥

समानमित्येवम्। अन्तरेण चात्वालोत्करौ संचरः [2.1.6] इति यदुक्तं यच्च धिष्ण्योपस्थानं [4.2.1] यच्च दक्षिणाप्रतिग्रहो [5.3.15] यच्च सोमभक्षः [5.1.3] तत् सर्वं समानमिति ॥

स्तोमविमोचनाच्चोर्ध्वमन्यत् सामगानात् ॥ ४ ॥

तृतीयसवने स्तोमविमोचनादूर्ध्वम्[5] [6.3.4]। तदपि समानम्। अवभृथ[6]वर्जमिति [6.4.1] ॥ तत्रौद्गात्रवदौपवसथ्ये ऽहनि गमने प्राप्त [1.1.22] आह—

अनुष्यात् तु दीक्षणीयायाम् ॥ ५ ॥

दीक्षणीयायामिष्टिमनु ब्रह्मा स्यात्। तत्काल एव मन्त्रेण देवयजनं गत्वा

1 Dcdef °णा

2 Dce मंत्रेण, Ddf मंत्रणं

3 Gb om.

4-4 Df गमनं तत् ब्रह्मणः,

5 Gb adds यदुक्तं

6 Gb adds साम after अवभृथ

वेदेराक्रमणमीक्षणं च कार्यं दीक्षणीयायां ब्रह्मत्वकरणार्थमिति[1] भावः। तदानीं ब्रह्मणो ऽपि मधुपर्काहरणं तु[2] कार्यम् [cp.1.2.1]। मधुपर्कभक्षणं तु शास्त्रान्तरोक्तप्रकारेण ब्रह्मणा[3]ः कार्यम्। ननु पुनरुद्गातुः प्रकारेणा[4]तिदेशाभावादिति ॥

तस्यां संस्थितायामासीता दीक्षणाद् यजमानस्य ॥ ६ ॥

इष्टयनन्तरमा दीक्षासमाप्तेरुभावपि न कुत्रचिद् गच्छेताम्। अदीक्षिष्टायं ब्राह्मणः इत्यावेदनात् पूर्वमिति यावदिति ॥

तं यदाध्वर्युर्वाचं यमयेदथ यथार्थं स्यात् ॥ ७ ॥

तं यजमानमित्यर्थः। दीक्षित वाचं यच्छ इत्यध्वर्युप्रैषानन्तरं यथार्थं स्यादिति ॥

महावीरान् संभरिष्यत्सु तूष्णीमुपविशेत् ॥ ८ ॥

दीक्षितासु[5] महावीरान् संभरिष्यति[6] [cp. Kāt. 26.1.1] इति कात्यायनसूत्रम्। महावीराः प्रवर्ग्यपात्राणि। तेषां संभरणा[7]काले वाग्यत उपविशेदिति ॥

संभृतेषु यथार्थं स्यात् ॥ ६ ॥

स्पष्टमिति ॥

प्रायणीयायां संस्थितायां[8] पूर्वेण पत्नीशालां तिष्ठेदाभिहोमात् पदस्य राजक्रयण्याः ॥ १० ॥

सोमक्रयण्या[9]ः पदाभिहोमं यावत् तिष्ठेदिति ॥

अभिहुत उत्तरेण सोमवहनं गत्वा प्राग् वा पदाभिहोमाद् दक्षिणेन यत्र राजानं क्रेष्यन्तः स्युस्तत्र गत्वा तूष्णीमुपविशेत् ॥ ११ ॥

पदाभिहोमे कृते सोमवहनं शकटमुत्तरेण गत्वा यत्र सोमं क्रेष्यन्तः स्युस्तत्र गत्वोपविशेत्। अथवा पदाभिहोमात् पूर्वमेव सोमवहनं दक्षिणेन गत्वा क्रयदेश उपविशेदिति ॥

क्रीते[10] प्राङुत्क्रामेत् पश्चिमेनैनं हृत्वा राजानमाद्ध्युराहितं पूर्वेण परीत्योह्यमानमनुगच्छेद् दक्षिणेन चेद् गतः स्यात् ॥ १२ ॥

1 Gb ब्रह्मत्वप्रकरणमिति
2 Gb om.
3 Dcdef om.
4 Gb प्रकरणा°
5 Dcd om.
6 Dcde °ष्यंति, Gb °भरेद्
7 Gb संभार°
8 Dbcde add यथेतं निष्क्रम्य (= Lāṭ.)
9 Gb °क्रयिण्याः
10 Gb adds सोमे

यदि पूर्वं सोमवहनं दक्षिणेन ब्रह्मा[1] गतः स्यात् तदा क्रयानन्तरं प्राक् प्रसर्पेत्[2]। तं पश्चिमेन राजानं हृत्वा शकट आदध्युरध्वर्यवः। अथ ब्रह्मा तमाहितं सोमं पूर्वेण प्रसव्यं[3] परीत्य शकटेनोह्यमानमनुगच्छेदिति ॥

**उत्तरेण चेत् क्रीते प्रत्यङ्ङुत्क्रामेत् पूर्वेणैनं हृत्वा राजानमादध्युराहितं पश्चिमेन परीत्योह्यमानमनुगच्छेत् ॥ १३ ॥**

यदि[3] सोमवहनमुत्तरेण ब्रह्मा गतः स्यात् तदा क्रयानन्तरं प्रत्यक् प्रसर्पेत्। गतमन्यदिति ॥

**तामेवात्रेषामन्वावर्तेत ॥ १४ ॥**

प्राङ्मुखे शकटे वर्तमाने यस्याः पार्श्वेन गतस्तत्पार्श्वेनैवं[4] प्रत्यङ्मुखे शकटे ऽपि[5] गच्छेदित्यर्थः ॥ का पुनरसौ तामाह—

**सा हि[6] प्राचीर्वर्तमानस्य दक्षिणैषा भवति ॥ १५ ॥**

प्राग्वर्तमानस्य[8] शकटस्य[9] दक्षिणैषा सैवासाविति। दक्षिणैषा पार्श्वेनैवं[10] प्राग्गमनं प्रत्यग्गमनमपीत्यर्थः ॥

**विमुक्ते चान्तरेण सोमवहनं पत्नीशालां च दक्षिणोत्[11]क्रम्य तिष्ठेद् दीक्षितश्चेदा राज्ञो ऽपहरणात् ॥ १६ ॥**

अनडुहि विमुक्त इत्यर्थः[12] ॥

**प्रवेश्यमानं राजानमनुप्रविशेदव्यवयन्नग्निना[13] ॥ १७ ॥**

अग्निना[14]हवनीयेन सह सोमस्य[15] व्यवायमकुर्वन् प्राग्वंशं प्रवेश्यमानं राजानमनुप्रविशेदिति ॥

1 Gb om.
2 Gb सर्पेत्
3 Gb adds पूर्वं
4 Gb गतस्तस्याः पार्श्वे
5–5 Dcde पि शकटे
6 Dbcde ह्यस्य
7 Dbcde प्राचिव॰ (=Lāṭ.)
8 Gb प्राचीव॰
9 DcdGb add या
10 DbcdGb ॰नेव
11 Dbcdf दक्षिणेनो॰
12 Gb adds अदीक्षित इति पर्युदासः सत्रे दीक्षितस्यातिथ्यायां निर्वापानुसंधानार्थमन्तःप्रवेशस्यावश्यंभावात् सत्रादन्यत्र राजरक्षणार्थं तिष्ठेदेवेति
13 Ga ॰दव्यवयं नाना, Gb ॰दव्ययं न निनीते
14 DcdeGb अग्निरा॰
15 Gb om. स्य

संबाधं[1] चेत् स्याद् दक्षिणयापि[2] द्वारा प्रविशेत् ॥ १८ ॥

स्पष्टमिति ॥

उत्तरेणाहवनीयं पश्चिमेन वेदिं संचरेद् दीक्षितश्चेत् ॥ १९ ॥

स्पष्टमिति ॥

प्रथमः खण्डः ॥ १ ॥ ॥ ५ ॥

---

आतिथ्यामिष्टिं निर्वपन्ते ॥ १ ॥

अध्वर्यव इति शेषः ॥

तां चेदनपहृते[3] राजनि निर्वपेरन् ब्राह्मणं राजनि समादिश्य तत्र गत्वासीत ॥ २ ॥

यदि राज्ञो ऽपहरणात् पूर्वमेव निर्वपेरन् तदा राजरक्षार्थं[4,5] कंचिद् ब्राह्मणमादिश्यान्तः प्रविशेदिति ॥

तस्यां संस्थितायां तानूनप्त्रमाज्यमवमृशन्तो जपेयुः—हविरसि वैश्वानरम्। अनाधृष्टमस्यनाधृष्यं देवानामोजो ऽनभिशस्त्यभिशस्तिपा अनभिशस्तेन्यम्। अञ्जसा सत्यमुपगेषं सुविते मा धाः इति ॥ ३ ॥

ऋत्विजामन्योन्यद्रोहपरिहाराय यद् घृतं स्पृश्यते तत् तानूनप्त्रम्। तत् सर्वे ऽप्युद्गातारो ब्रह्मा चावमृश्य जपेयुरिति ॥

अप उपस्पृश्याध्वर्युणोक्तो राजानं विस्रंसयेत्[6] ॥ ४ ॥ तं हिरण्यमन्तर्धायाभिमृशेयुः—अंशुरंशुष्टे[7] देव सोमाप्यायतामिन्द्रायैकधनविदे। आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्व। आप्याययास्मान् सखीन् सन्या मेधया। स्वस्ति ते[7] देव सोम

1 Dbcde संबधः

2 Gb om. अपि

3 DbcdG °वहृते (= Lāṭ.)

4 Dbcd व°

5 Gb °रक्षणार्थं

6 Dabcd विस्रंभयेत् (= Lāṭ.), Df विश्रंभयेत्. Cp. Reuter's note on X. 2. 13. Gb has the following commentary on this sūtra: सोमोष्णीषं विस्रंसयेत् आप्यायनायेति.

7-7 Gb om.

सुत्यामुदृचमशीय इति ॥ ५ ॥

[1]स्पष्टं इति[1] ॥

काशमये प्रस्तरे निह्नुवीरन्[2] दक्षिणान् पाणीनुत्तानान् कृत्वा सव्यान् नीचैः[3]—एष्टा रायं एष्टा वामानि प्रेषे भगायर्तमृतवादिभ्यो नमो दिवे[4] नमः पृथिव्यै इति ॥ ६ ॥

निह्नवो नमस्कारः । कृते हि नमस्कारे पुरुषस्य दोषश्छादितो भवतीति । तदुपायत्वान्निह्नव[5] इत्युच्यते । तथा च ब्राह्मणम्—न वै देवा नमस्कारमति । यज्ञो वै नमस्कारः इति । आतिथ्यासंबन्धिनि काशमये प्रस्तरे दक्षिणान् पाणीनुत्तानान् निधाय तत उपरि सव्यान् नीचः कुर्युः । सो ऽयं नमस्काराञ्जलिरिति ॥

सुब्रह्मण्यास्वाहूयमानासु दक्षिणोत्क्रम्य तिष्ठेद् दीक्षितश्चेत् ॥ ७ ॥

आहूतासु यथार्थं[6] स्यात् ॥ ८ ॥

[1]स्पष्टं इति[1] ॥

उपसदिष्टिरत ऊर्ध्वं तस्यां तथैवाभिमर्शननिह्नवने ॥ ९ ॥

तस्यामुपसदि संस्थितायां तथैव हिरण्यमन्तर्धाय सोमाभिमर्शननिह्नवने[6] कुर्युरिति ॥

सव्या अपराह्ण[7] उत्तानाः स्युर्दक्षिणा न्यञ्चः ॥ १० ॥

आपराह्णिक्यामुपसदि सव्याः पाणय उत्तानाः स्युर्दक्षिणाः पाणयो न्यञ्चः स्युरिति ॥ कः पुनरुपसदन्तो[8] यत्र निह्नवः[9] । तमाह—

स्रुवेणोपसद्धोमे हुते विद्यात् संस्थितेति ॥ ११ ॥

त्वेषं वचो अपावधीर्म् इत्यध्वर्युणा हुते संस्थितेति विद्यादिति ॥

तस्या घर्मः प्रवर्ग्यवति पूर्वस्तमभीन्धिष्यत्सु[10][11] ॥ १२ ॥

द्वितीयः खण्डः ॥ २ ॥ ॥ ६ ॥

---

1-1 Gb om.
2 Df निह्नुवीयात्
3 Ga सव्यान्यश्च
4 Ga repeats नमो दिवे
5 Gb तदुपायं नि॰
6 Gb ॰नं च
7 DcefGb om. अ
8 Dcde ॰सदोन्तो
9 Gb निह्नवनः
10 Dd धीद्
11 Ga ॰मभिसंधीष्यत्

गार्हपत्यं गत्वा यजुषोपविशेद् दक्षिणेन ॥ १ ॥

प्रवर्ग्यवति क्रतौ तस्या उपसदिष्टेः पूर्वः[1] प्रवर्ग्यो भवति । तमभीन्धिष्य-त्स्वध्वर्युषु गार्हपत्यं गत्वा तस्य दक्षिणत उप[2]विशेदिति ॥

दक्षिणाग्न्युत्तरेण बहिश्चेत् ॥ २ ॥

यदि गार्हपत्यायतनाद् बहिः प्रवर्ग्यः स्यात् तदानीं[3] दक्षिणाग्न्युत्तरेणो-पविशेदिति ॥

रुचितो घर्मः [cp. 2. 2. 28] इत्युक्ते ऽनु[4]वाकेन तिष्ठन्तो ऽवेक्षेरन्[5] यमध्वर्युर्ब्रूयात् ॥ ३ ॥

रुचितो घर्मः इत्यध्वर्युणोक्ते अपश्यं गोपाम् इति यमनुवाकमध्वर्युर्ब्रूयात् तेना-नुवाकेन महावीरमवेक्षेरन्नुद्गातारो ब्रह्मा वेति ॥

तं ह्रियमाणं यथे[6]तमनुव्रजञ्जपेत्—

विश्वा आशा दक्षिणसत् सर्वान् देवानयाडिह ।

स्वाहाकृतस्य घर्मस्य मधोः पिबतमश्विना ॥

इति ॥ ४ ॥

तं घर्मं ह्रियमाणं यथेतमनुव्रजञ्जपेदिति ॥

आश्रावित उपविश्य जपेत्—

अश्विना घर्मं पातं हार्दिवानमहर्दिवाभिरूतिभिः ।

तन्त्रायणेन नमो द्यावापृथिवीभ्याम् ॥

इति ॥ ५ ॥ हुते यजमानं वाचयेत्—

अपातामश्विना घर्ममनु द्यावापृथिवी अमंसाताम् ।

इहैव रातयः सन्तु ॥

इति ॥ ६ ॥

1 Dcd पूर्वं
2 Gb यजुषोप॰
3 Gb तदा
4 Ga तनानु॰
5 Gb ॰मनुर्वाक्षेर॰
6 DfG यथैत॰

**घर्मशेषस्य भक्षयेत्**—मधु हुतमिन्द्रतमे ऽग्नावश्याम ते देव घर्म नमस्ते ऽस्तु मा मा हिंसीः इति ॥ ७ ॥

स्पष्टानीति ॥

**सत्त्रं चेत् स्यात्** यजमाना उपह्वयध्वम् **इत्येवोपह्वानम्** ॥ ८ ॥

सत्त्रव्यतिरिक्तेषु होतरुपह्वयस्वाध्वर्य उपह्वयस्व इति कर्मनामधेयेनोपह्वानं कार्यं वाजिनाश्विनघर्माणामृत्विक्नूपहवमिष्ट्वा [12.4.20] इति वचनादिति ॥

**एवं सदा प्रवर्ग्योपसदः कुर्यात् ॥ ९ ॥ महावेदेः स्तम्बयजुर्हरिष्यत्सु यजुषोपविशेत् ॥ १० ॥ विलिखिते चात्वाले यथार्थं स्यात् ॥ ११ ॥ उत्तरवेदिं निर्वप्स्यत्सु तूष्णीमुपविशेत् । न्युप्तायां यथार्थं स्यात् ॥ १२ ॥**

स्पष्टानीति ॥

**अग्निचित्यायां प्राग्दीक्षणीयायाः सावित्रान् होमान् होष्यत्सु यजुषोपविशेत् ॥ १३ ॥**

अग्निचित्यायामित्यधिकारः । यदि क्रतावग्निचित्या स्यात् तदेत्यर्थः अनुष्यात्तु दीक्षणीयायाम् [14.1.5] इति वचनात् । साग्निचित्ये ऽपि सोमयागे दीक्षणीयाप्रभृत्येव ब्रह्मत्वमिति शङ्का स्यात् तन्निवृत्त्यर्थं प्रागपि दीक्षणीयायाः सावित्रेषूपविशेत् । सावित्रहोमस्त्वेक एवेत्यापस्तम्बः [cp. 15. 9. 3]। होमानिति बहुवचनं कस्यांचिच्छाखायां होमबहुत्वादिति ॥

**तेषु हुतेषूख्यां मृत्तिकामाह्रियमाणामनुगच्छेत् ॥ १४ ॥ तस्यां ह्रियमाणायामासित्वा संभृतायां यथार्थं स्यात् ॥ १५ ॥**

स्पष्टे इति ॥

तृतीयः खण्डः ॥ ३ ॥ ॥ ७ ॥

---

1 Dce °पा°
2 Gb स्मृति° for सत्त्र°
3 Gb om. कर्म
4 Daf °सदोः
5 Ddf (sec. m.) निव°
6 Gb निरुप्ता°
7 Gb °याः
8 Df °यां
9 ? Dce तेषूपविशेत्, Ddf सत्रेषूपविशेत्, Gb सावित्रेषूपविशेदित्युक्तमिति
10 Da (first hand) संह्रिय°, Dbcde संभ्रिय° (=Lāṭ.)
11 Da संहृ°

आहवनीयं चेष्यत्सु यजुषोपविशेत् ॥ १ ॥

आहवनीयः शालामुखीयः । तस्यायतनमिष्टकाभिश्चेष्यत्स्वित्यर्थः[1] इति ॥

तस्मिन् संचित उख्यामासन्दीं नैर्ऋतीश्चेष्टका अरण्यं ह्रियमाणा अनुगच्छेत् ॥ २ ॥

तस्मिन् शालामुखीये ऽध्वर्युणा चिते सत्युख्याग्निर्यत्रासन्द्याः पूर्वं निहितस्तामुख्यां निधानभूतामासन्दीं[2] नैर्ऋतीश्चेष्टका[3] ऽरण्यं प्रति ह्रियमाणा अनुगच्छेदिति ॥

निधीयमानानां दक्षिणतः स्थित्वा निहितास्वप उपस्पृश्यानपेक्षं[4] प्रत्याव्रजेत् ॥ ३ ॥

स्पष्टमिति ॥

अग्निं विकृक्ष्यत्सु[5] सर्वौषधं च वप्स्यत्सु तत्र गत्वा तूष्णीमुपविशेत् ॥ ४ ॥

महावेद्यामग्निक्षेत्रस्य कर्षणं तत्र बीजावपनं[6] च करिष्यत्स्वित्यर्थः ॥

तैः सार्धं प्रत्याव्रज्य चितीः प्रणीयमाना अनुगच्छेत् ॥ ५ ॥

चितीश्चयनार्था[7] इष्टकाः प्रणीयमाना इत्यर्थः ॥

निधीयमानानां दक्षिणतः स्थित्वा निहितासु दक्षिणस्य पक्षस्यासन्नो यजुषोपविशेत् ॥ ६ ॥

उपधीयमानानामिष्टकानां तस्यास्तस्याः[8] दक्षिणतः स्थित्वा सर्वासु समाप्तासु दक्षिणस्य पक्षस्य दक्षिणतः संनिकृष्ट उपविशेदिति ॥

लोकंपृणास्[9] उपधीयमानासु ब्राह्मणं[10] तत्र समादिश्य यथार्थं स्या-

1 Df °श्चेष्यन्नित्यर्थः, Gb °श्चेष्यत्सु सत्स्वित्यर्थः
2 Gb निध°
3 Gb नैर्ऋतीरिष्टकाश्च
4 G °पेक्षं
5 Df विक्रम्यत्सु, Ga विकर्षन् सु, Gb विकृष्यत्सु
6 Dcdef °वापनं, Gb °वापं
7 Dd °नार्थं
8 Gb om.
9 Da नि° for उप°
10 Da ब्रह्माणं

दिति शाण्डिल्यः ॥ ७ ॥ आसीतैवेति धानंजय्यः ॥ ८ ॥

स्पष्टे इति ॥

एवं सदा चितिषु कुर्यात् ॥ ९ ॥

एवं पञ्चस्वपि चितिषु कुर्यादिति ॥

संचितकर्माणि करिष्यत्स्वाव्रजमासीत ॥ १० ॥

वसवस्त्वा रुद्रैः पुरस्तात् पान्तु इत्याज्यप्रोक्षणप्रभृति[3] मण्डूकविकर्षणान्तानि संचितकर्माणि[4]। तेष्वाव्रज्यासीतेति ॥ एतदन्तमग्निचित्यानिमित्तं ब्रह्मत्वमिति ॥

सम्राडासन्दीं ह्रियमाणामनुगच्छेत् ॥ ११ ॥

प्रवर्ग्योद्वासनकाले[5] इति शेषः ॥

निधीयमानायां[6] दक्षिणतः स्थित्वा परिषिच्यमानेऽप उपस्पृश्य तैः सार्धं प्रत्याव्रज्याग्निं प्रणीयमानमनुगच्छेदप्रतिरथं जपन् ॥ १२ ॥

घर्मे परिषिच्यमानेऽप उपस्पृश्य तैः सार्धं प्रत्याव्रज्य सौमिकमग्निं प्रणीयमानम् आशुः शिशानः[8] [SV 2. 1199] इति सूक्तमप्रतिरथसंज्ञकमध्वर्युप्रसिद्धं जपन्ननुगच्छेदिति ॥

तूष्णीमनग्निचित्या चेत् ॥ १३ ॥

अग्निचित्याभावे तूष्णीमनुगमनं न सूक्तजप इति ॥

निधीयमानस्य दक्षिणतः स्थित्वा निहिते दक्षिणा बहिर्वेदि यजुषोपविशेद् ॥ १४ ॥

अग्निनिधानानन्तरमग्निवत्युत्तरं परिग्राहं परिगृह्णातीत्यध्वर्युभिरुत्तरैरपरिग्राहो विहितः। तत्काले न केनचिदप्यन्तर्वेदि स्थातव्यमित्यभिप्रायेण बहि-

1 Ga संनिहित°
2 DfG °त्र°
3 Gb °प्रोक्षणं प्रति
4 Gb adds आध्वर्यवाणि
5 Gb प्रवर्ग्योद्वास
6 Dbcde °नानां
7 Gb प्रणीयमानमनुमंत्रयते । प्र°
8 Gb adds वृषभ
9 Gb °धानान्तमग्नीत्यु°
10 DcdeGb °गृह्णामीत्य°
11 Gb adds -वेदि-

वेद्युपविशेदित्युक्तमिति[1] ॥

हविर्धाने प्रवर्त्यमानेऽनुगच्छेत् ॥ १५ ॥

स्पष्टमिति[2] ॥

परिवार्यमाणयोस्तत्रैव गत्वासीत[3] ॥ १६ ॥ उच्छ्रितायामौदुम्बर्यां यथार्थं स्यात् ॥ १७ ॥ वेदिकर्मप्रभृति वाग्नीषोमप्रणयनात् प्रणयनात्[6] ॥ १८ ॥

अथवाग्निप्रणयनानन्तरं यद् वेदिकर्मोत्तरं परिग्राहस्तत्प्रभृत्यग्नीषोमप्रणयनात् पूर्वं यथार्थं ब्रह्मा स्यात्। तथोक्तं ब्रह्मत्वं[8] कुर्याद् वा न वेत्यर्थः ॥

चतुर्थः खण्डः ॥ ४ ॥ ॥ ८ ॥

---

## चतुर्दशः पटलः ॥ १४ ॥

---

धन्विना रोपिते दीपे ब्रह्मत्वस्य विधिं प्रति।
चतुर्थे पटले त्वर्धं सोमयागस्य कीर्तितम् ॥

1 Dce °वैद्युपवेशनमित्यु°, Dd °वैदिरित्युपवेशनमित्यु°

2 Gb adds हविर्धाने इति द्विवचनमध्वर्युणा प्रवर्त्यमाने शकटे इति

3 Gb adds the comment परिवारणं कटादिभिः परिश्रयणमिति

4 Gb adds the comment स्पष्टमिति. 16 and 17 are one sūtra in De, while Ddf om. them.

5 Da चाग्नीषोमीय°

6 DaGb repeat प्रणयनात्

7 Gb अथा°

8-8 Gb हविर्धानप्रवर्तनकर्मानुसंधानं

अग्नीषोमौ प्रणेष्यत्सु वेदिमाक्रामेन्मन्त्रेण ॥ १ ॥

कः पुनर्मन्त्रः कथं [illegible] आह—

पश्चिमेनोत्तरवेदिमुदङ्ङतिक्रम्याक्रमणयजुर्जपेत्[1] ॥ २ ॥

मृदा शिथिरा देवानां तीर्थम् [cp.3.1.2] इत्युद्गातॄणां यदाक्रमणयजुरुक्तं[2] तज्जपेदिति ॥

चात्वालसमीपे दीक्षितश्चेत् ॥ ३ ॥

स्पष्टमिति ॥

तूष्णीमत ऊर्ध्वं वेदेराक्रमणः ॥ ४ ॥

सवनमुखेषु च यजुषाहरहरिति गौतमः [3.1.4-5] यावद्वाक्रामेयुरित्येके [3.1.7] इति सूत्रद्वयेन सर्वेषु वेद्याक्रमणेषूद्गातॄणां[3] पुनःपुनर्मन्त्रो विहितः । ब्रह्मणस्तु तन्निवृत्तये[4] तूष्णीमिति[5] वचनमिति[6] ॥

क्रीत्वा राजा येनातिहृतः स्यात् तेन गत्वा तूष्णीमुपविशेत् ॥ ५ ॥

येन मार्गेण सोमं क्रीतमतिहरन्ति तेन गत्वान्तः प्रविश्याध्वर्युप्रभृतीनां दक्षिणेनोत्तरेण वा गत्वापरेणाहवनीयं दक्षिणातिक्रम्योपविशेदिति ॥

राजानं हर इत्युक्तः पूर्वेणाग्निमेकस्मा अतिप्रदाय तान् प्रसव्यं परीत्यादायानुगच्छेद् दक्षिणेन चेद् गतः स्यात् ॥ ६ ॥

यदि राजानं हर इत्यध्वर्युरेनं ब्रूयात् तदा प्रणीयमानमग्निं पूर्वेण सोमं

1 Da °मुदङ्ङनिष्क्र°

2 Gb यदाक्रमणे उक्तं

3 Gb वेद्यनुक्र°

4 Gb तत्तन्निवर्तयेत्

5 Dcde तूष्णी-

6 Gb om.

कस्यचिद्धस्ते प्रदाय तानध्वर्युप्रभृतीन् प्रसव्यं परीत्य सोममादद्य[1] तान् गच्छतो ऽनुगच्छेद् यदि दक्षिणेन तान् प्रविष्टः स्यादिति ॥

उत्तरेण चेद् यथेतं[2] परीत्यादायानुगच्छेत् ॥ ७ ॥

यद्यध्वर्युप्रभृतीनुत्तरेण गतः स्यात् तदा यथागतं प्रदक्षिणं परीत्यानुगच्छेदिति ॥

अन्येन चेद् ब्रह्मा व्रजितः[3] स्यादन्येन राजा तेनैनं प्रतिगृह्णीयात् ॥ ८ ॥ [4]उत्तरेण विहारं[4] पश्चिमेन वेदिं संचरेद् दीक्षितश्चेत्[5] ॥ ९ ॥

पूर्वमुक्तं यदि तेन पथा ब्रह्मा गतः स्यात् ततो ऽन्येन मार्गेण सोमस्तदापि राजानं हर इति चोदितः प्रत्याव्रज्य राज्ञो मार्गेणैव राजानमाददीतापरेणाहवनीयं दक्षिणातिक्रम्येत्यर्थः[6] ॥

स एव हि[7] राज्ञः पन्था अध्वर्युभिरुक्तः ॥ १० ॥ एतौ त्वेव ब्रह्मणो गतिकल्पावहरतो[8] ऽपि ॥ ११ ॥

राज्ञो हरणमकुर्वतो ऽपि ब्रह्मण एतावेव गतिकल्पौ[9] भवतः । तान् प्रसव्यं परीत्य [sū. 6] इत्येकः कल्पः । यथेतं परीत्य [sū. 7] इत्यपर इति ॥

आसीताग्नीध्रीय आहुत्योर्हूयमानयोरिति धानंजय्यस्तिष्ठेदिति शाण्डिल्यः ॥ १२ ॥

आग्नीध्रीयाहवनीययोर्द्वे वैसर्जनाहुती स्तः । तयोर्हूयमानयोराग्नीध्रीय एवासीत तिष्ठेद् वेति ॥

उत्तरेणाग्नीध्रीयं राजानमाज्यानि च ह्रियमाणान्यनुगच्छेत्[10] ॥ १३ ॥

तयोर्हुतयोः पुनरपि[11] राजानमग्नीषोमीयार्थानि च[12]आज्यान्यनुगच्छेदिति ॥

1 Gb om. सोमं

2 Ga यथैतं; Dbcde (and Lāṭ.) add अग्निं

3 Ga प्रव्र॰

4-4 Gb उत्तरेणाहवनीयं

5 DbGa (and Lāṭ.) om. sūtras 9,10.

6 Gb ॰क्रमेणेत्यर्थः

7 Dcde om.

8 Dcde वहरण॰

9 Gb गमनक॰

10 Dbcd ह्री॰

11 Gb adds ह्रियमाणानि

12 Gb om. च

प्रवेशितेषु हविर्धानं पश्चिमेन गत्वासीतेति गौतमः ॥ १४ ॥
पूर्वेणेति धानंजय्यो दक्षिणस्य द्वारबाहोः पुरस्ताद् यजुषोपविशेत्[1] ॥ १५ ॥

स्पष्टे इति ॥

अग्नीषोमीयवपायां हुतायां यथेतमुदङ्ङतिक्रम्य[2] चात्वाले मार्जयेत[3] ॥ १६ ॥

मार्जनं सिद्धमेवं[4] [13. 3. 15] । यथेतमित्येतत्त्वद्विधेयमिति ॥

एवमेवापररात्र आज्येषु प्रविष्टेषूपवेशनम् ॥ १७ ॥

अपररात्रे सवनीयपशोराज्येषु प्रविष्टेष्वेवमेवोपवेशनं कार्यम् । हविर्धानं पश्चिमेन पूर्वेण वा गत्वेत्यर्थः ॥

मार्जनं च ॥ १८ ॥

प्रथमः खण्डः ॥ १ ॥ ॥ ६ ॥

---

सवनीयवपायां हुतायाम् ॥ १ ॥

एवमेवेत्यनुवर्तत इति ॥

पुरोडाशेन चरिष्यत्सु तूष्णीमुपविशेत् ॥ २ ॥

अग्नीषोमीयस्य पशुपुरोडाशेनेत्यर्थः ॥

दीक्षितश्चेत् सर्वा इडा अन्वारभेत ॥ ३ ॥

स्पष्टमिति[5] ॥

वसतीवरीषु परिह्रियमाणासु[6] दक्षिणोत्क्रम्य तिष्ठेददीक्षितश्चेदा तासां परिहरणात् ॥ ४ ॥

अदीक्षितो बहिर्वेदि दक्षिणोत्क्रम्य तिष्ठेदिति ॥

1 G यजुषेति (=Lāt.)
2 G यथैत°
3 Daf °त्
4 Gb सर्वपशूनां पूर्वमुक्तमेव for सिद्धमेव
5 Gb om.
6 Daf om. परि

आग्नीध्रीयं राजानं ह्रियमाणमनुगच्छेत् ॥ ५ ॥

वसतीवरीहरणोत्तरमाग्नीध्रीयं प्रति सोमं ह्रियमाणमनुगच्छेदिति । ननु चापस्तम्बादिभिः सोमस्य हरणं नोक्तम् । सत्यम् । अत एव विधानादन्यैः कैश्चिदुक्तमिति । कल्पसामर्थ्यसिद्धं चैतत् । कथम् । ऋत्विजो यजमानश्चाग्नीध्रीये हि वसन्ति यजमानो राजानं गोपयतीति विहितम् । ततश्च सामर्थ्यसिद्धं हरणमिति ॥

दीक्षितश्चेत् तत्रैव संविशेत् ॥ ६ ॥

स्पष्टमिति ॥

अपररात्र आज्यानि ग्रहीष्यतः पूर्वेण गत्वाग्निं च पश्चिमेन वा यजुषोपविशेत् ॥ ७ ॥

सवनीयपश्वर्थान्याज्यानि ग्रहीष्यतोऽध्वर्योराग्नीध्रीयमग्निं च पूर्वेण पश्चिमेन वा गत्वोपविशेदिति ॥

आत्तेषु प्राङुत्क्रम्य प्रसव्यं परीत्यानुगच्छेत् पूर्वेण चेद् गतः स्यात् ॥ ८ ॥

आत्तेष्वाज्येषु प्राङुत्क्रम्य तानध्वर्यून् प्रसव्यं परीत्यानुगच्छेदिति ॥

पश्चिमेन चेद् यथेतं परीत्यानुगच्छेत् ॥ ९ ॥

यद्याज्यग्रहणकाले पश्चिमेनोपविष्टस्तदा प्रदक्षिणं परिगमनमिति ॥

प्रवेशितेषूपविशेत् ॥ १० ॥

हविर्धानमाज्येषु प्रवेशितेष्वित्यर्थः ॥

आज्येष्वेव ग्रहीष्यमाणेष्वत्रोपविशेदिति शाण्डिल्यः ॥ ११ ॥

आज्यग्रहणवेलायामेवाग्नीध्रीयान्निष्क्रम्य हविर्धानस्य पश्चिमेन पूर्वेण वोपविशेदिति ॥

अध्वर्युणोक्तो वाचं यच्छेदा तृतीयं प्रातरनुवाकस्य ॥ १२ ॥

1 Dbc ह्रीय°
2 Dcd °हरणानन्तरमा°, Gb वसतीवरीपरिहरणाग्रहणानन्तरमा°
3 Dcde om.
4 Gb om.
5 Gb adds च
6 Dadf om.
7 Ga संवसेत्
8 G यथैतं ; Dbcde (and Lāṭ.) add अग्निं
9 Gb om. यदि
10 Daf गृह्यमा°
11 Gb °काले for °वेलायां

प्रातरनुवाकस्य प्रथमायास्तृतीयं यद् वचनम् आ तस्माद् वाग्यतः स्यादिति । अथवा आ तृतीयमित्या तृतीयाया ऋच इत्यर्थः ॥

आ वा परिधानीयायाः ॥ १३ ॥

अथवा प्रातरनुवाकस्य परिधानीयान्तं वाग्यतः स्यादिति ॥

आ वोपांश्वन्तर्यामयोर्होमात् ॥ १४ ॥

स्पष्टमिति[1] ॥

आ वा बहिष्पवमानात् ॥ १५ ॥

प्रातरनुवाकप्रभृति बहिष्पवमानपर्यन्तं[2] इति ॥

हविर्धानं चेत् पूर्वेण गतः स्यादुपांश्वन्तर्यामौ होष्यत्सूदङ्ङतिक्रम्य तिष्ठेत् ॥ १६ ॥

यदि[3] हविर्धानं पश्चिमेनोपविष्टः[4]स्तदोपांश्वन्तर्यामयोर्होमकाले स्थानं न[5] कार्यमिति[5] ॥

दीक्षितश्चेदा तयोर्होमात् ॥ १७ ॥

दीक्षितस्य[6] ब्रह्मणो होमसमाप्तिं यावत् स्थानं न कार्यमिति ॥

निःसर्पत्स्वन्वारभेत ॥ १८ ॥

बहिष्पवमानार्थं हविर्धानान्निःसर्पत्स्वध्वर्य्वादिषु प्रतिहर्तारमन्वारभेत ब्रह्मा । तत् पूर्वमेव [3. 3. 12] सूत्रकृतोक्तमिति ॥

तस्य प्रस्तोत्रा समानं कर्म प्रागुपवेशनात् ॥ १९ ॥

प्रवृत्तं[7]होमादिकर्म [cp. 3. 3.17] तस्य प्रस्तोत्रा समानमुपवेशनवर्जं[8]मिति ।

आस्तावं प्राप्यानासन्नो यजुषोपविशेत् प्रस्तोतारं प्रति ॥ २० ॥

बहिष्पवमानस्तुतिदेशं प्राप्योद्गातृभ्यः किंचिद् विप्रकृष्टः प्रस्तोतारमभिमुखो यजुषोपविशेदिति [cp. 2. 4. 20] ॥

द्वितीयः खण्डः ॥ २ ॥ ॥ १० ॥

---

1 Gb om.

2 DdGb °न्तम्

3 Dce यदा

4 Dce पूर्वेण प्रविष्ट°

5–5 Gb न्याय्यमिति

6 Gb सत्रेषु दीक्षितस्य तु

7 Dcde प्रकृत°

8 Dcdef(first hand) om. वर्ज

रश्मिरसि [PB 1. 9, 10] इत्येतावनुवाकौ स्तोमभागाः ॥ १ ॥

तस्मा एतान् स्तोमभागानब्रवीत् [PB 15. 5. 24] इति ब्राह्मणे स्तोमभाग-पदेन रश्मिरसि इत्यादयः समाख्यायन्त इत्यर्थः ॥ समाख्याप्रयोजनं च वक्ष्याम इति ॥

तैः पृथगनुपूर्वं स्तोत्राण्यनुमन्त्रयेत ब्रह्मन् स्तोष्यामः प्रशास्तः इत्युक्तः ॥ २ ॥

बहिष्पवमानादीनि स्तोत्राण्यतिरिक्तस्तोत्रपर्यन्तानि त्रयस्त्रिंशत् तानि। तैः स्तोमभागैस्तावत्संख्यैः क्रमेण पृथगनुमन्त्रयेत ॥ तत्र विशेषं वक्ष्याम इति ॥

ऊर्ध्वं प्रथमाद् रात्रिपर्यायाद् यत्र स्यात् अमुष्मै त्वा इति तं जिन्व इति तत्र[1] ब्रूयात् ॥ ३ ॥

प्रथमाद् रात्रिपर्यायादूर्ध्वं स्तोमभागेषु यत्रयत्र[2] अमुष्मै त्वा इति पदद्वय-मस्ति। अमुष्मा इति चतुर्थ्यन्तानां पदानामुपलक्षणम्। तत्र पदद्वयानन्तरमध्यय-नाभावे ऽपि तं जिन्व इति ब्रूयात्[3]। तमिति द्वितीयान्ततया प्रयोज्यानां त्रिवृदादि-पदानामुपलक्षणम्। तेनैवं प्रयोगः—त्रिवृदसि त्रिवृते त्वा त्रिवृतं जिन्व। प्र[4]वृदसि प्रवृते त्वा प्रवृतं जिन्व[4] इति ॥

सवितृप्रसूता बृहस्पतये स्तुत इत्येकैकस्यान्तः ॥ ४ ॥

तेषु सवितृप्रसूता [5]बृहस्पतये स्तुत[5] इति प्रत्येकमनुषञ्जनीयमिति ॥

पूर्वेषां च ॥ ५ ॥

पूर्वेषां रश्मिरसि इत्यादीनां विंशतिमन्त्राणामपि [PB 1. 9. 1-12, 10. 1-8] सवितृप्रसूता[6] इत्येवान्तैः[7]। नन्वध्ययनसिद्धमेवैतन्न वक्तव्यम्। सत्यम्। वक्ष्यमाण-विकल्पदर्शनार्थमनुवादो मन्त्रपरिमाणज्ञानार्थं[8] चेति ॥

भूर्भुवः स्वर्बृहस्पतिर्ब्रह्माहं [9]मानुष ओम्[9] [cp. 12. 2. 28] इत्येतद् वाधिकं कुर्यादोंकारं वा ॥ ६ ॥

सवितृप्रसूता बृहस्पतये स्तुत इत्यस्या[10]नन्तरमधिकं निवेशयेद् विकल्पेनेति ॥

1 Gb तत्
2 Dce यत्र only once; Gb यथा
3 Gb adds पूर्वेषु तथाध्ययनात्
4-4 Gb om.
5-5 Dcd om.
6 Gb adds बृहस्पतये स्तुत
7 Gb इत्येव मन्त्रान्तः
8 Gb मन्त्रमोक्षार्थं
9-9 De मानुषोम्
10 Gb इति मन्त्रस्या°

यथाम्नायं संधेरनुमन्त्रयेत ॥ ७ ॥

वसुको ऽसि [PB 1. 10. 11] इत्यादिसंधिस्तोत्रानुमन्त्रणमविकृतमेवेति ॥ मतान्तरमाह—

त्रैधं विभजेदिति[1] धानंजय्यः[2]—वसुको ऽसि वस्यष्टिरसि वेषश्रीरसि । वसुकाय त्वा वस्यष्टये त्वा वेषश्रिये त्वा । वसुकं[3] जिन्व वस्यष्टिं जिन्व वेषश्रियं जिन्व । सवितृप्रसूता बृहस्पतये स्तुत इति ॥ ८ ॥

वसुको ऽसि वसुकाय त्वा वसुकं जिन्व इत्येवमर्थः[4] संबन्धः । सो ऽयमेको विभाग एवमुत्तरावपीति[5] ॥

स्तुत देवेन सवित्रा प्रसूताः इत्यनुमन्त्रयेत मानसं वाजपेये च बृहत् ॥ ९ ॥

अविवाक्ये दशमे ऽहनि मानसं स्तोत्रं वाजपेये च बृहदुत्तमं स्तोत्रं स्तुत देवेन इत्येवा[6]नुमन्त्रयेतेति ॥

आनन्तर्येणेतराणि ॥ १० ॥

इतराणि मानसवाजपेयान्त्यव्य[7]तिरिक्तानि सर्वसंस्थासु संहृत्य त्रयस्त्रिंशदेव स्तोत्राणि तानि त्रयस्त्रिंशता स्तोमभागैः[8] क्रमेणानुमन्त्रयेत । ननु च । अत्यग्निष्टोममेकमधिकमस्ति[9] । तत् कथं त्रयस्त्रिंशत् स्तोत्राणि । उच्यते । उक्थ्यानन्तरमुत्पन्नस्य षोडशिनः[10] स्तोत्रस्य तत्रापकृष्य प्रयोगमात्रं न पुनरपूर्वं स्तोत्रान्तरमस्तीति ॥ अथ नैमित्तिकेषु स्तोत्रेषु कथमनुमन्त्रणमत आह—

ईध्रात् स्तोत्राणि पूर्वेण तद्वृद्धेः[11] ॥ ११ ॥

ईध्रशब्दो निमित्तवचनः । निमित्तं च सोमातिरेकः । यदि प्रातःसवनात् सामा ऽतिरिच्येत [PB 9. 7. 1] इति ब्राह्मणेन[12] निमित्तान्यन्यानि[13] विहितानि । पूर्वेण

1 Dbcde °भजेतेति

2 Gb adds इति, thus making this a separate sūtra.

3 Ga वसुम्, Gb वसुर्

4 Dcd °मर्थतः

5 Gb °मुत्तरत्रापीति

6 Gb इत्यनु°

7 Dce °पेयोन्यानि व्य°, Gb °पेयव्य°

8 Dcde स्तोत्रभागैः, Gb स्तोमविभागैः

9 Gb अत्यग्निष्टोमे स्तोत्रमेकमस्ति

10–10 Gb °मुक्तस्य वपनस्य षोडशि-

11 DbcdeGa तद्विवृद्धेः (=Lāṭ.)

12 Gb ब्राह्मणे

13 Gb निमित्तायानि

पूर्वस्तोत्रस्य स्तोम[1]भागेनानुमन्त्रयेत नित्य[2]स्तोत्रस्य [3]वृद्धिमात्रत्वात् तस्येति[2] ॥

**परेण वा तन्निकामनात् ॥ १२ ॥**

पश्चाद्भाविना वा स्तोमभागेनानुमन्त्रणम् । कुतः । माध्यन्दिनं वा एष सवनं निकामयमानो ऽभ्यतिरिच्यते [PB 9. 7. 2] इतीतरस्य[4] माध्यन्दिनादेर्निकामनश्रवणात् । निकामनमिच्छेति ॥

**मानसवद् वातिरिक्तसामान्यात् ॥ १३ ॥**

अथवा[5] मानसस्तोत्रवदनुमन्त्रणमतिरिक्त[6]त्वसामान्यात् । अग्निष्टोमादतिरिक्तं हि मानसम् । नैमित्तिकमपि नित्यादतिरिक्तमिति ॥

**सर्वानुमन्त्रणेन वानुक्तत्वात् ॥ १४ ॥**

अथवा यैः पूर्वमिष्टिप्रकरणे सर्वानुमन्त्रणसंज्ञको मन्त्र उक्तस्तेन वानुमन्त्रण[illegible]ादिति ॥

**यद्यत्[7] स्तोत्रं लुप्येत सहैव स्तोमभागेन ॥ १५ ॥**

यदि पर्यायानभिव्युच्छेत् सर्वेभ्य एकं सं[8]भरेयुः [6. 6. 1] इत्याश्वलायनोक्ते संभार[9]पक्षे यानि स्तोत्राणि लुप्तानि यश्च षोडशी वैकल्पिकत्वाल्लुप्यते तानि स्वकीयैः स्तोमभागैः सहैव लुप्यन्ते । न तैः शिष्टानुमन्त्रणं कार्यं क्रमसंख्याभ्यां नियतत्वात् स्तोमभागानाम्[10] । स्तोत्रस्यासाधारणो भागः स्तोमभाग इति हि[11] समाख्या । एतदेव हि समाख्याप्रयोजनम् । ननु च । प्रधानलोपे गुणलोपो न्याय्य एवेति । न वक्तव्यमित्येतत् । सत्यम् । आपस्तम्बस्तु सप्तदश वाजपेये [11. 10. 13] इति वदन् तं नियमं मन्यते तदनिष्टमिति दर्शयितुमेतदुक्तमिति ॥

**स्तुते बहिष्पवमाने[12] वपायां हुतायां मार्जयित्वा धिष्ण्यानुपस्थायोक्तं सदस्युपवेशनम् ॥ १६ ॥**

दक्षिणार्धे तु सदसः पूर्वमुपवेशनम् [4.4.9] इत्यादि षट्पटल्यामुक्तमनुसंधे-

1 Gb स्तोत्र°

2–2 Gb °स्तोत्रवृद्धिमात्रत्वात् नैमित्तिकस्येति भावः

3 Dcde वित्रु°

4 Gb इति परस्य

5 Dce अथ

6 Gb °रिक्तस्य

7 Gb ·यत्

8 Df संहृ°

9 Dcd संभरण°, Def संहरण°

10 Gb adds हि

11 DceGb om.

12 Dd °भागेन (=Lāṭ.); Dbcde (and Lāṭ) add तत्रैव गत्वासीत

यमिति[1] ॥

स्तुतशस्त्रयोर्वाचं[2] यच्छेत्[2] ॥ १७ ॥

स्पष्टमिति[3] ॥

अनूच्यमाने च सर्वत्र ॥ १८ ॥

सर्वेषु[4] पुरोनुवाक्यामनोतानुवचने[4] वाग्यमनमिति ॥

वषट्कृते विसृजेत्[5] ॥ १९ ॥

स्पष्टमिति ॥

अवभृथादुदेत्यानुष्याद् यज्ञशेषम् ॥ २० ॥

यज्ञशेषमन्वासीतेत्यर्थः ॥

अहर्गणेष्वेनं सदातिप्रैषेण प्रशास्ता वाचं यमयति राजानं रक्ष इति चाह तदुभयं कुर्यादा वसतीवरीणां परिहरणात्[6] ॥ २१ ॥

प्रशास्ता मैत्रावरुणः स एनमनुप्रैषेणा[7]श्वलायनोक्तेन[8] हारियोजनप्रचारानन्तरं[8] वाचं यमयति—ब्रह्मन् वाचं यच्छ [Āśv. 6.11.16] इति ॥

तत् सत्रे पर्यायेण कुर्युरहीने तु ब्रह्मैव[9] ॥ २२ ॥

सत्रेषु[10] यजमानाः[10] पर्यायेण तदुभयं कुर्युः । प्रथमे दिवसे कश्चिद् द्वितीयेऽपर इत्येवम् । अहीने तु ब्रह्मैव प्रतिदिवसमुभयं कुर्यादिति ॥

तृतीयः खण्डः ॥ ३ ॥ ॥ ११ ॥

---

वाजपेये पृष्ठ्यस्य स्तोत्रमनुमन्त्र्य सदस्यं ब्रह्मासने[11] उपवेश्य निष्क्रामेत् ॥ १ ॥ पूर्वेणाग्नीध्रीयं स्थूणा निखाता स्यात् ॥ २ ॥

अध्वर्युणेति शेषः ॥

1 Dd adds ॥११॥ thus ending the section here (=Lāṭ.).

2–2 Gb °शस्त्रवपायां वाचं यच्छेयुरिति

3 Gb om.

4 Dcde सर्वत्रति सर्वेषु

5 Dbcd °जेत (=Lāṭ.)

6 Ga °हरणान्तम्

7 Dcd एनमति°

8–8 Gb °यनोक्तहार्योज°

9 Gb om. अहीने तु ब्रह्मैव

10 Gb om.; Dcde सत्रे तु

11 Gb °सनम्

दक्षिणेन मार्जालीयमन्तर्वेदीति शाण्डिल्यः ॥ ३ ॥ तस्यामौदुम्बरं सप्तदशारं रथचक्रं प्रतिमुक्तं स्यात् ॥ ४ ॥

[1]स्पष्टे इति[1] ॥

तदभावे यत् किंचिद्[2] रथचक्रम् ॥ ५ ॥

उदुम्बराभावे यदेव किंचिद् रथचक्रं सप्तदशारं स्थूणायां प्रतिमुक्तं स्यादिति ॥

तस्मिन् बाहू आदध्यात्—देवस्याहं सवितुः प्रसवे सत्यसवसो[3] बृहस्पतेर्वाजिनो वाजजितो वर्षिष्ठमधि[4] नाकं रुहेयम् इति ॥ ६ ॥

तस्मिन् रथचक्रे[5] बाहू [6]आदध्यान्मन्त्रेणेति ॥

रथेष्वाजिं धावत्सु आविर्मर्याः इति गायेदाकारमुद्गीथादौ लुप्त्वा तस्य स्थाने प्रत्याहृत्य अक्षरम् अग्मन् इति ॥ ७ ॥

लक्षणमुद्दिश्य[7] रथेषु धावत्सु साम गायेत् । आ वाजं वाजिनो अग्मन् इत्युद्गीथादावाकारमुपसर्गं लोपयित्वा तस्य स्थाने अग्मन्निति अक्षरं प्रत्याहृत्य गायेत् अग्मन्वाजं वाजिनः इति[8] । किमर्थः पुनरालोपः । गमनकाले मन्त्रेण गमनमेव प्रतिपादनीयं न पुनरागमनमिति लोप उक्त इति ॥

गतेषु वा ॥ ८ ॥

अथवा रथेषु लक्ष्यं प्रतिगतेष्वेव गायेन्न धावत्सु अग्मन् इति भूतनिर्देशविरोधादिति ॥

यथाधीतमाधावत्सु[9][10] ॥ ९ ॥

प्रत्यागच्छत्सु रथेषु यथाधीतमाकारमलुप्त्वैव गायेत् तस्यागमनाभिरूपत्वादिति ॥

आसृ[11]तेषु वा ॥ १० ॥

1-1 Gb om.
2 DbdGb किंच (=Lāṭ.)
3 Da (sec. m.) °श°, Df(?)Ga °श्र°
4 Ga वरिषिष्ठमधि, Gb वर्षिष्ठे अधि
5 Gb adds ब्रह्मा
6 Dcd नि°
7 Df अक्षमु°, Gb लक्ष्यमु°
8 Gb adds आविर्मर्या इति
9 In Dd the rest of the paṭala is missing.
10 Df ends here.
11 Dbc °ह°, Gb °हु°

आगतेष्वेव गायेद् भूतनिर्देशादेवेति ॥

सर्वत्र वा[1] यथाधीतम् ॥ ११ ॥

गमने चागमने चेत्यर्थः । सर्वथापि[2] द्विरेव गानमिति परिवर्तयन् गायेदिति ॥

गानकाले रथचक्रं बाहुभ्यां प्रदक्षिणं[4] परिवर्तयन् गायेत्[4] ॥१२॥

परिवर्त्य[5] गायेद् गीत्वा वा परिवर्तयेत् ॥ १३ ॥

अथवा परिवर्तनात् पूर्वकालमुत्तरकालं वा गानं न सकालमिति ॥

गायतो वान्यस्तं[6] परिवर्तयेत् ॥ १४ ॥

ब्रह्मणि गायति सति रथचक्रमन्यः परिवर्तयेदिति ॥

उदङ्ङवरोहं मन्येत—विष्णोः क्रमो ऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसि[2] इति ॥ १५ ॥

उदङ्मुखो भूत्वा रथचक्रादवरूढमात्मानं मन्येत । अत एव गम्यते न प्रत्यक्षेणारोहणमवरोहणं वेति ॥

अभिदक्षिणमावृत्य सदः प्रविशेत् ॥ १६ ॥

स्पष्टमिति[7] ॥

तत्रासीनो हिरण्यस्थालं[8] मधु च नाना प्रतिगृह्णीयात् ॥ १७ ॥

हिरण्यस्थालं मधुना पूर्णं ब्रह्मणे [24. 3. 27] दद्यादिति वाजपेये वक्ष्यति । तत्र स्थालस्य प्राधान्यात् तस्यैव मन्त्रेण प्रतिग्रहो न मधुन इति शङ्कानिवृत्त्यर्थं नानेति वचनमिति ॥

ऋतपेये च दक्षिणां चमसम् ॥ १८ ॥

ऋतपेये क्रतौ सोमचमसो दक्षिणा [PB 18. 2. 10] इति ब्राह्मणम् । तत्रापि सोमरसं तत्पात्रं च दक्षिणाभूतं पृथगेव प्रतिगृह्णीयादिति ॥

ब्राह्मणाय[10] मधु दद्यान्निदधीत हिरण्यम् ॥ १९ ॥

आत्मार्थमेव हिरण्यस्थालं निदधीतेति ॥

1 Dce आह°
2 Ga om.
3 Gb सर्वत्रा°
4–4 DbGa (and Lāṭ.) om., Da om. प्रदक्षिणं परिवर्तयन् गायेत्
5 Gb adds वा
6 Da वान्यस्तत्, DbGa वान्यं, Gb वान्यः (=Lāṭ.)
7 Gb om.
8 DbG हिरण्यं (=Lāṭ.)
9 Gb हिरण्यं हिरण्य°
10 Dce ब्राह्मणे

त्रिष्टुप्छन्दसा सर्वभक्षं चमसं भक्षयेत् ॥ २० ॥

सोमचमसं च दक्षिणार्थत्वादप्राप्तमेव मन्त्रेण भक्षणं विधीयत इति ॥

तं प्रतिगृह्णीयादिति स्थविरो गौतमः ॥ २१ ॥

तं सोमरसमेव प्रतिगृह्णीयान्न पुनः पात्रस्य पृथग् ग्रहणमर्थः । कुतः । हुतो देयः [24.1.22] इति वचनात् सोमरसस्यैव दक्षिणात्वप्रतीतेरिति गौतम इति[2] ॥

गौतममतेनैव चमसभक्षणे मन्त्रान्तरमाह ॥

कस्त्वा ददाति स त्वा ददाति कस्मै त्वा ददाति तस्मै त्वा ददाति कस्त्वा कं भक्षयामि इति भक्षयेत् ॥ २२ ॥ वाग् देवी सोमस्य तृप्यतु इति वा ॥ २३ ॥ उभाभ्यां वोभाभ्यां वा ॥ २४ ॥

गौतमस्य मतेन मन्त्रद्वयमिति[2] ॥

चतुर्थः खण्डः ॥ ४ ॥ ॥ १२ ॥

---

पञ्चदशः पटलः ॥ १५ ॥

---

द्राह्यायणकृते सूत्रे दीपे धन्विविनिर्मिते ।
द्वितीये दशके वृत्तः पञ्चमः पटलोऽधुना ॥

इति पञ्चमोऽध्यायः ॥

1-1 Gb पात्रस्यापि पृथक् प्रतिग्रहः
2-2 Gb om.
3 Dd resumes the text here.